विपर्ययव्याप्तेर्विरुद्धता हेतोः, विशेषणत्रयवत्या अपि भावनाया विशदाभभ्रान्तविज्ञानजनकत्वात् । दृष्टान्तस्य च साध्यहीनत्वात् । यदा च भूतार्थभावनाजनितत्वेऽपि नास्य प्रामाण्यमभूतार्थत्वात्, तदा यदुच्यते,

[3] निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः ।
न बाधा यत्नवत्वेऽपि बुद्धेस्तत्पक्षपाततः ॥

[प्र. वा. I. 112-13]

इति । तदनुपपन्नम् । भूतार्थत्वेऽपि हि बुद्धेः तत्पक्षपातिता भूतार्थैः प्रतिपक्षै[1]र्बाधो न भवत्[2] । अभूतार्था त्वियं सात्मीभाव[3]मापन्नाप्यात्मात्मीयदृष्टिरिव सम्भवद्बाधा । तस्मात् प्रतिपक्षविवृद्धिमात्रम् । न त्वा[4]त्यन्तिकी विवृद्धिः सम्भवति । यथा समूलका[4]षं कषिता दोषा न पुनरुद्भविष्यन्ति । अतएवास्थिराश्रयत्वेऽपि अपुनर्यत्नापेक्षत्वेऽपि[5] अस्य नात्यन्तिकी निष्ठा सम्भवति । आत्माऽऽत्मीयदृश इव विरोधि[6]प्रत्ययसम्भवात् । तत्सम्भवश्चाभूतार्थत्वात् । श्रुतानुमित[7]विषयं तु प्रत्यक्षं न सम्भवत्येव । तयोः परोक्षरूपावग्राहित्वात् । प्रत्यक्षस्य च तद्विपरीतत्वात् । तद्गतभूताभूता[5]र्था[8]नुविधायित्वेन दृष्टविषये श्रुतानुमानज्ञानापेक्षया[9] प्रामाण्यानुपपत्तेश्च ।

तत् सिद्धमेतत् भूतार्थभावनाप्रकर्षपर्यन्तजविज्ञानमप्रत्यक्षमर्थेऽप्रामाण्यात्[10] ।

यदप्रमाणं तदप्रत्यक्षमर्थे ।
यथा कामातुरस्य कामिनीविज्ञानम् ।
अप्रमाणं च तत् ।
नितान्तविशदाभत्वे सति भावना[प्रकर्ष]जत्वात्[11] ।
यन्नितान्तविशदाभत्वे सति भावनाप्रकर्षजं[12] वि[6]ज्ञानं तदप्रमाणम् ।

यथानुमितभावितवह्निविशदविज्ञानमिति । समानहेतुजत्वं समानरूपतया व्याप्तम् यदाह

तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः[13]

[प्र. वा. II. 251]

इति । तदस्य[14] प्रामाण्यं निवर्तमानं तुल्यहेतुजत्वमपि निवर्तयति । न चैव भूतार्थभावनाप्रकर्षपर्यन्तजोऽनिन्द्रियसन्निकृष्टानुमितभावितवह्निवैशद्ये च निरात्मकसमस्तवस्तुवशद्ये च विशिष्य[8a.1]ते । न च रागाद्यावरणविरहो[15] वा विशेषः । न खल्वेते कम्बलादिवदावरका विज्ञानस्य । किन्तु तदाक्षिप्तमना विविधविषयभेदतृष्णादिपरिप्लुतो न शक्नोति भावयितुमिति भावनावरमात्र एव

1. पातेन नाभूतार्थै—Ms. 2. बाधा भवेत् Ms. 3. सात्माऽभाव K.—4. नचा—K. 5. पेक्षित्वे K. 6. विरोधि K. 7. तच्च न । अनुमित K. 8.—र्थत्वा० K. 9.—पेक्षतया—K. 10. प्रमाणत्वात् K. 11. जन्यत्वात् K. 12.—प्रकर्ष omitted, Ms. 13. तद्रूपतद्रूपिणो भावा० Ms. 14. तदस्याः K. 15. वा omitted, K.

तद्बहिरङ्गोपयोगः । अस्ति चेहापि शिशिरभरसम्भूत[1]जडिममन्थरतरकायकाष्ठध्मानभिसवह्निस्वयमभियोग इति न हेतुभेदतः प्रसिद्धसिद्धिः । *न चैकपार्थिवाणुसम-[2]वायिकारणजन्मचिरभिन्नौष्ण्यापेक्षैकवह्निसंयोगासमवायिकारणैर्गन्धरसरूपस्पर्शैर्नाना/ध्वभावे-व्यभिचारः । सामर्थ्यवैचित्र्यादेकत्वेऽपि पार्थिवस्य परमाणोः तद्वैचित्र्यं च कार्य-वैचित्र्योपलम्भात् । तच्च नित्यसमवेतं नित्यं कारणसामर्थ्यंप्रक्रमेण च पार्थिवावयविनि कार्ये जायत इति प्रपञ्चितम् । परिशिष्टं तु ग्रन्थव्याख्या[3]नसमये व्याख्यास्यामः । तदास्तां तावत् ॥

त्रिलोचनस्तु न्यायप्रकीर्णके प्राह । इह किल दुःखसमुदयनिरोधमार्गाख्यान्यार्याणां सत्यानि चत्वारि । तेषां सत्यानां स्वरूपसाक्षात्कारिज्ञानं योगिप्रत्यक्षम् । तत्र दुःखं फलभूताः पञ्चोपादानस्कन्धाः । तच्च स्वरूपतो ज्ञातव्यम् । त एव हेतुभूताः समुदयः । स च प्रहा-तव्यः । निःक्ले[4]शावस्था चित्तस्य निरोधः । स च साक्षात्कर्तव्यः । तदवस्था-प्राप्तिहेतुर्नैरात्म्यक्षणिकत्वाद्याकारश्चित्तविशेषो मार्गः । स च भावयितव्यः । इति सौगत-मतम् ।

अत्रोच्यते । मार्गस्तावत् प्रमाणपरिशुद्धो न भवतीत्युक्तं प्राक् । अतोऽभूतविषयस्य विकल्पस्याभ्यासादसत्यार्थविज्ञानं स्यान्न संवादि । अपि च प्रमाणपरिशुद्धमार्गवादी शा[5]क्यः प्रमाणं पृष्टः सन् सत्त्वाख्यलिङ्गजं विकल्पं ब्रूयात् । ततो यावद्विकल्पेन दर्शितरूपं तत्सर्व-मसत् । शब्दसंसृष्टत्वात् । तस्मिंश्च भाव्यमाने सत्त्वे भावकस्य विकल्पकस्य भावनो-पहिते विशदाभत्वे शब्दसंसृष्टग्राह्यनिमित्तं विकल्पकत्वं निवर्तते । तद्व्यावृत्तौ ग्राह्यमपि शब्द-संसृष्टं निवर्तते । अतो निर्विकल्पकमपि योगिज्ञानं [6] निर्विषयं प्रसक्तम् । यत्तु पार-मार्थिकं वस्त्वात्मकं न तत्प्रमाणपरिशुद्धम् । शुद्धौ वा किं भावनया । भाव्यस्य साक्षा-द्विज्ञातत्वात् । न चान्यस्मिन् शब्दसंसृष्टे भाव्यमाने स्फुटमन्यद्रूपं भवति । शोकातुरस्यापि निरुद्धेन्द्रियव्यापारस्य तनयभावनायां मित्रादिप्रतिभासप्रसङ्गात् ।

क्षणिकत्वे भाव्ये समारोपिते वास्तवं क्षणिकत्वमेव योगिविज्ञानप्रतिभासीति चेत् । न । स[8b.1]त्यासत्ययोरेकत्वाभावात्मके हि भेदेऽसत्यभावनेऽपि यदि सत्यप्रतिभासः, तर्हि सत्यतनयाभ्यासेऽपि शब्दसाम्यादभेदिनस्तनयसंज्ञकस्य कस्यचिदपरस्य स्वरूपप्रतिभासप्रसङ्गः । तस्मादभूतविषयाभ्यासं निर्विकल्पकमपि संवादान्न प्रमाणमिति न सर्वज्ञसिद्धिः ।

अपि च भाव्यस्य वस्तुनः पुनः पुनश्चेतसि निवेशनमभ्यासः । स च ब्रह्मचर्येण तपसा सादरं [2] दीर्घकालं निरन्तरमासेवितो दृढभूमिरस्फुटाकारस्य विकल्पस्य स्फुटाभत्वजनक इष्टः । स क्षणिकत्वनैरात्म्यवादिना प्रकटयितुमशक्यः । तथाहि भाव्यग्राही यादृशो विकल्प उत्पन्नस्तादृश एव निरन्वयं निरुध्यते । तस्मिंश्च निरुद्धे पुनः पुनरुत्पद्यमानः प्रत्ययस्तादृश एवापूर्व उत्पद्यते । तदनेन पर्यायेण कल्पसहस्रे[3]ऽपि अपूर्वोत्पत्तेरविशेषान्न तज्जन्यः

1. तरसम्भूत—K.

A separate hand adds रूपरसादिभिः समवेतपरमाणोरग्निसन्निधौ रूपरसादि-कार्यवैचित्र्यदृष्टेः कारणाभेदेऽपि कार्यभेदो दृष्टस्ततोऽनैकान्तिकत्वं, Place not indicated.

संस्कारोऽभ्यास उत्पद्यते। एतेन विशिष्टविज्ञानोत्पादोऽभ्यासो व्याख्यातः। निरन्वयनिरुद्धं हि पूर्वपूर्वविज्ञानं कथमुत्तरोत्तरावस्थान्तरं विशिष्टं जनयेत्। सर्वथा क्रमभाविभिः[1] प्रत्ययैरव्यवस्थितमेव कथं शक्यं संस्कर्तुम्। अनवस्थितं तु जन्मोत्पादव्ययवदविज्ञानमित्यविशिष्टं स्यात्। तस्मात् [4] प्रत्यावृत्तिभाव्यवस्तुप्रत्ययजः संस्कारो व्युत्थानप्रत्ययसंस्कारविरोधी यस्यास्ति तस्यैवात्मनः प्रकृष्टोऽपि भाव्यसाक्षात्कारिप्रत्ययहेतुरिति युक्तं पश्यामः। विक्षिप्तं चित्तमेकाग्रं व्यवस्थापयितुं विक्षेपत्यागार्थमभ्यासोऽनुष्ठीयते। न च क्षणिकवादिनां विक्षिप्तं चित्तमस्ति। प्रत्यर्थनियततया सर्वस्य चित्तैकाग्रत्वात्। तथाहि यदि साका[5]रं विकल्पविज्ञानं स्वप्रतिभासनियतत्वात् एकाग्रमेव तत् कथं विक्षिप्यते। अथ निराकारं तथापि विकल्पकं प्रति विकल्प्यं भिन्नमेव। नतु सर्वविकल्पानामेकं विकल्प्यमस्ति। ततो निराकारमपि विज्ञानं नियतालम्बनत्वादेकाग्रमेव, न विक्षिप्तम्। सर्वथा नास्ति क्षणिकवादिनामेकमनेकार्थमवस्थितं चित्तं यदेकाग्रं कर्तुमिष्यते। तदेव[6]मभ्यासानुपपत्तेरसर्वज्ञवत्यां चित्तसन्ततौ। न च विज्ञानविशेषः सर्वज्ञः सिध्यतीति ॥

न्यायभूषणकारस्त्वाह। सर्वज्ञानानां निरालम्बनत्वे संवेदनमात्रत्वे च योगीतरप्रत्ययक्षयोः को विशेषः। शुद्धाशुद्धत्वमिति चेत्। भवतु नामैवम्। तथापि चतुरार्यसत्यादिविषयत्वमयुक्तम्। न हि स्वात्ममात्रवेदनेन चतुरार्यसत्यादिकं साक्षात्कृतमिति युक्तमतिप्र-[9a.1]सङ्गात्।

तदाकारत्वेन तद्विषयत्वमिति चेत्। तत् किमिदानीं सौत्रान्तिकमतमभ्युपगतं सत्यम्। तथाप्यतीतानागतविषयत्वं कथम्। नह्यसतः कश्चिदाकारोऽस्ति। दृष्टश्रुतानुमिताकारश्च यदि भावनाबलतः स्पष्ट एवावभाति, तथा च सति भ्रान्तमेव योगिप्रत्यक्षं स्यात्। अविद्यमानस्य विद्यमानाकारतया प्रतिभासनात्, स्वप्नवत्। तथा[S]विसंवादित्वान्न भ्रान्तम्। न। अनुमानज्ञानस्य भ्रान्तत्वेऽपि अविसंवादित्वाभ्युपगमात्।

अथ भ्रान्तस्यापि संवादित्वेन प्रामाण्यम्। तथापि प्रत्यक्षलक्षणस्याभ्रान्तत्वविशेषणं विरुध्यते। न चाविसंवादित्वमपि त्वन्मते युक्तम्। यतः प्राप्यार्थदर्शकत्वं वा, प्रवृत्तिविषयोपदर्शकत्वं वा, अवभातादर्थक्रियानिष्पत्तिर्वा भवतामविसंवादित्वमभिप्रे[3]तम्। न चैतदतीताद्यर्थज्ञाने सम्भवति। वर्तमानार्थज्ञानस्यापि क्षणिकत्वपक्षे नोपपद्यत एव। तस्मात् सौगतानां योगिप्रत्यक्षोपवर्णनमयुक्तमेवेति ॥

किञ्चेदमपि वक्तुमुचितम्। यद्यनुमानपूर्वकमर्थेषु भावनाबलजज्ञानमाश्वासभाजनं, तदास्तां तावदनुमानपौरुषप्रत्याशा। प्रत्यक्षेणापि चक्षुर्दह[4]नादिकं गृहीत्वा भावनाप्रकर्षपर्यन्ते जातं स्थिरतरं तदाकारविज्ञानं स्यात् यावन्न विपरीतभावनाभियोगपर्यन्तः। अस्तङ्गतश्च तद्विषयोऽवस्थान्तरप्राप्तो वेति कथं प्रमाणोपनीतवस्तुगोचरत्वेऽपि संवादाश्वासः। अपिच यदा हालिक एव हव्याशनमनुमाय भावनया स्फुटयेत्, तदा न तद्योगिज्ञा[5]नं चपरमार्थविषयाभावादिति प्रत्यक्षान्तरप्रसङ्गः।

किञ्च तद्योगिज्ञानमिन्द्रियज्ञानाद्भिन्नमभिन्नं वा। अभेदपक्षे न योगिज्ञानं नाम प्रत्यक्षेण भिन्नमिन्द्रियज्ञानेनैव संग्रहात्। न च भावनोपस्कृतसन्तानस्य तथोदयाद् भेदव्यवस्था। रसा-

1. भ्रमभाविभिः (?) Ms.

अनादिसंस्कारापेक्षयापि प्रत्यक्षान्तरव्यवस्थाप्रसङ्गात्। भेदपक्षे च भाव[6]नाजन्यं ज्ञानं क्षणिकसाक्षात्कारि। इन्द्रियज्ञानं च स्थैर्यग्राहीति साध्वी सिद्धिः। इन्द्रियज्ञानस्यापि तदवस्थायामस्थैर्यग्रहणे कृतं योगिज्ञानेन। न च तस्याकस्मिकः क्षणिकत्वावबोधः। भावनोद्भूतवैशद्यस्य हि तद्बोधः। न चेन्द्रियज्ञानस्य भावना। अपि तु मनोविज्ञाने। तामन्तरेणापि साक्षात् क्रियालाभे च भावनावैयर्थ्यमिति कार[9b.1]णाभावादेव सर्वज्ञप्रतिहतिः।

अत्राभिधीयते। यत्तावत् सर्वपदार्थसंवेदनस्य कारणं किमिन्द्रियज्ञानमित्यादि वल्गितं तत्र भावनाबलजं मनोविज्ञानमेव सर्वपदार्थग्राहीति पञ्चम एवास्माकं पक्षः। अतः पक्षान्तरभाविनो दोषा अनभ्युपगमप्रतिहताः। यच्चास्मदभ्युपगते पंचमे पक्षे दूषणमुक्तम्, अनर्थत्वात्प्रत्यक्षशब्दस्य, तस्य च भावना[2]बलावलम्बिनोऽप्यनक्षजत्वान्नार्थसाक्षात्कारित्वमस्तीति, तदसङ्गतम्। तथाहि प्रत्यक्षशब्दस्य तावदक्षाश्रितत्वं व्युत्पत्तिनिमित्तमर्थसाक्षात्कारित्वन्तु प्रवृत्तिनिमित्तमिति प्रतिपादितम्। न च भावनाबलावलम्बिनो मनोविज्ञानस्यानक्षाश्रितत्वेऽप्यर्थसाक्षात्करणे कश्चिदस्ति शक्तिप्रतिघातः। यथाहि चक्षुरिन्द्रियं स्वसामर्थ्यानतिक्र[3]मेण योग्यदेशस्थमर्थमपेक्ष्य स्वविज्ञानजनने प्रवर्तते, तथा सर्वाविद्यापरिपन्थिभूतार्थभावनासहितं मनइन्द्रियमपि योग्यदेशस्थमर्थं प्राप्य स्वविज्ञानजनने प्रवर्तिष्यते। अप्राप्यकारिताया उभयोः साधारणत्वात्। अर्थवशायाश्च मनसोऽपि तदानीमिष्टत्वात्। पृथग्जनस्य तु न तादृशी शक्तिः, यतो नेत्रश्रोत्र[4]वन्मनोऽपि तादृग्मर्यादया योग्यदेशस्थमर्थसहकारिणमासाद्य वेदनमुत्पादयेत्। सर्वाविद्योन्मूलकस्य भावनाविशेषस्य सहकारिणोऽभावादिति नातिप्रसंगः। तदवस्थायां तु श्रुतिनयनयोरिव मनसोऽपि कियद्दूरेण विषयसन्निधिव्यवस्थितिक एव प्रमातुं क्षमः। केवलमेतावदुच्यते। यावत्तेन[5]शक्यमधिगन्तुं स्वाकारार्पणसमर्थं सहकारि वस्तु तावदितरजनासाधारणं कुर्वद्रूपतया तस्य गोचरीभवतीति। अत एवार्थाकारो वस्तुतो न भावनामात्रजनित इति न विसंवादशंकापि। भावनया पुनस्तदीयसन्ताने नेत्र इवाञ्जनविशेषेण शक्तिरतिशयवती काचिदर्पिता यत्परजननासाधारणदर्शनमस्य। त[6]स्मादनक्षजत्वेऽपि मनोविज्ञानस्यार्थसाक्षात्कारित्वं सम्भवति, न तु मनसो बहिरस्वातंन्त्र्यम्। अन्यथाऽन्धबधिराद्यभावप्रसङ्गात्। उक्तञ्च।

योगिनां धर्माधर्मयोरपरोक्षप्रतिभासं ज्ञानं नास्ति।

इन्द्रियसन्निकर्षाभावादस्मदादिवदिति।

अपिच, अर्थस्य हि आलम्बनप्रत्ययत्वमिन्द्रियापेक्षत्वेन व्याप्तम्। तच्चास्मात् स्वविरुद्धोपलब्ध्या व्यावर्तमानमा[10a.1]लम्बनप्रत्ययतामपि तस्य निवर्तयति। न ह्यन्धनविशेषो धूमहेतुरिति विनापि दहनं सहस्रेणापि संस्कारैर्धूममाधत्ते। अन्यथाने समस्तकार्यहेतुत्वानुमानोच्छेदप्रसङ्गः। न च भावनाबलेन कस्यचिदतीन्द्रियदर्शित्वं सर्वज्ञत्वं वा दृष्टमिति चेत्।

अत्रोच्यते। मनःशब्देन तावदस्माकमनक्षजं विज्ञानमेवाभिप्रेतम्। न चास्मिन्नन्धबधिरा[2]द्यभावप्रसङ्गः। सर्वाविद्याप्रतिपक्षभूतार्थभावनालक्षणस्य सहकारिविशेष-

स्यान्धादीनामभावात्। इंद्रियसन्निकर्षाभावादिति त्वर्थसाक्षात्कारित्वमात्रापेक्षया सन्दिग्धव्यतिरेकित्वे अनैकान्तिकी कारणानुपलब्धिः। अस्मद्विधार्थसाक्षात्कारित्वापेक्षया पुनः सिद्धसाधनम्।।

अस्मदादिविशेषणशून्यस्या[3]र्थसाक्षात्कारित्वमात्रस्यैवेन्द्रियाधीनत्वदर्शनादनैकान्तिकत्वमसम्भवीति चेत्। यद्येवमर्थसाक्षात्कारित्वमात्रस्येन्द्रियवदालोकाधीनत्वमुपलब्धमिति न सन्तमसे पश्येयुरुलूकादयः। अथ व्यभिचारदर्शनादालोकस्याव्यापकत्वम्, व्यभिचारशंकया तर्हीन्द्रियस्याप्यव्यापकत्वम्। व्याप्त्या शंका लुप्यत[4]इति चेत्। शंकासम्भवाद् व्याप्तिरेवासम्भविनी। यदि हि प्रथमत एव व्याप्तिः, व्यभिचारोऽपि न दृश्येत।

तस्माद् व्यभिचारदर्शनं व्याप्तिशैथिल्यादेव। सति च व्याप्तिशैथिल्ये ऽपि न्यायाबाधतन्ती केन प्रतिहन्यते। उलूकादीनां भिन्नजातीयत्वादालोकाभावेऽप्यर्थसाक्षात्कारित्वमस्त्विति चेत्। तर्हि भगवतोऽपि भता[5]र्थभावनाप्रकर्षपर्यन्तमहाप्रलयवायुना निरस्तानाद्यविद्याविपक्षस्य संसारबन्धः कूपपतितेभ्यः प्राणिभ्योऽस्त्येवाद्भुतवैजात्यमिति। मुक्तमस्याविद्याप्रतिपक्षभावनातिशयसहितात्मकानन्तरप्रत्ययादालम्बनप्रत्ययाच्च साक्षादुत्पन्नस्येन्द्रियमन्तरेणार्थसाक्षात्कारित्वम्। अतः कारणानुपलब्धिः का[6]शिकाकारस्य। व्यापकविरुद्धोपलब्धिश्च वाचस्पतेः सन्दिग्धव्यतिरेकित्वादनैकान्तिकी। सन्दिग्धव्यतिरेकित्वं तु दूषणमस्मदीश्वरदूषणे प्रसाधितम्।

तस्मात्साधारणकर्मनिर्जातानामस्मदादीनामर्थसाक्षात्कारित्वमिन्द्रियापेक्षत्वेन व्याप्तमिति सिद्धसाधनम्। प्रसिद्धानुमानस्य च न क्षतिर्द्वयस्योपाधेर्भावेः प्रत्यक्षानुपलम्भतो व्याप्तिग्र[10b.1]हणाविरोधात्। सांसारिकागोचरार्थसाक्षात्कारित्वमात्रापेक्षया तु सन्दिग्धव्यतिरेकित्वम्। अदृश्यस्य प्रत्यक्षानुपलम्भाभ्यां केनचिद्व्याप्तिग्रहणायोगात्। विपर्यये बाधकप्रमाणस्य चासम्भवादिति। न चातीन्द्रियदर्शित्वं सर्वज्ञत्वं वाऽदर्शनेऽपि निषेद्धुं शक्यते। अदृश्यानुपलम्भतो निषेधायोगात्।

कारणानुपलम्भतस्तन्निषेध इति चेत्। कारणाभा[2]वोऽपि अदर्शनमात्रतो न सिध्यतीति तदवस्थः परिभवः।

यदपि काशिकाकारेणाभिहितं, अथ प्रमाणान्तरावगतं भाव्यते। किं भावनया, तत एव सिद्धेरिति।

तदप्यसंगतम्। प्रमाणान्तरं ह्यनुमानम्। न च चतुरार्यसत्यस्वरूपे वस्तुतत्त्वे निश्चिते साक्षात्कारमन्तरेण क्लेशज्ञेयावरणक्षतिरिति स्वार्थमपि ता[3]वद् भावना मुक्तिमती। तत्त्वसाक्षात्कारिणि च चित्तसन्ताने सति श्रव्यसाक्षात्क्रियमिदमित्यन्येऽपि निश्चयानन्तरं साक्षात्क्रियार्थे प्रवर्तन्ते, तदुपदिष्टस्वर्गसाधनं चार्थभावनयानुसरन्तीति स्वर्गापवर्गलक्षणपरार्थसिद्धये च भावना सफलेति। अन्यथा तत्त्वासाक्षात्कारिणो लोकानतिक्रान्तस्य वचनमनादेय[4]मेव स्यादिति क्व परार्थवार्तापि। यच्च किञ्च तत्प्रमाणमित्यारभ्य तस्मादभूतमभूतं वेति एतत्पर्यन्तेन धर्माधर्मयोरनुमानाप्रवर्तनमुक्तम्, तत्र धर्माधर्मशब्देन किमभिप्रेतम्। यदि क्षणिकनिरात्मकवस्तु तत्त्वम्, तदा तत्र प्रत्यक्षेणानिश्चयेऽपि यथा विपर्यये बाधकप्रमाणबलेन व्याप्तिसंवेदनं, तथा क्षणत्वं[5]

व्यवस्थापितम्। अथ वस्तूनां स्वर्गादिसाधनत्वमभिप्रेतम्, तदा तद्विषयपरिज्ञानाप्रसाधनेऽपि नास्माकं काचित् क्षतिः। सपरिकरसंसारनिर्वाणपरिज्ञानेनैवोपयुक्तसर्वज्ञप्रसाधनात्। यदाहुः।

हेयोपादेयतत्त्वस्येत्यादि। [प्र. वा. III. 217]

यदपि, अपि च भावनाबलजं गृहीतग्रहणादप्रमाणमित्युक्तम्, तत्र गृही [6] तं नाम प्रत्यक्षानुमानेन वा। प्रमाणान्तरस्याभावात्। न तावत् प्रत्यक्षं क्षणिकत्वादावर्वाचीनस्य कस्यचिदस्ति। अनुमानेन चैकव्यावृत्तिविशिष्टे वस्तुतत्त्वेऽवसितेऽपि सर्वात्मना स्पष्टवस्तुतत्त्वसाक्षात्कारि प्रत्यक्षं न गृहीतग्राहि, अनुमानेन वस्तुतत्त्वास्पर्शनात्। न च तदुत्तरकालमित्यादि तु कारणानुपलब्धिदूषणप्रस्तावे प्रतिव्यूढमिति।

[11a.1] यदपि वाचस्पतिना सत्यमित्यादिना पुनः पुनरुत्तरोत्तरमाशंक्य तत् किमनुमानेन वह्निं व्यवस्थाप्येत्यादिना भावनाबलजस्यानुमानपूर्वकत्वे विसंवादमुपदर्श्योपसंहृतम्, तस्मात् भावनाया भूतार्थत्वं तज्जविशदविज्ञानप्रामाण्यहेतुः, व्यभिचारादिति।

तदसङ्गतम्। तथाह्ययं वह्निविषयानुमानपूर्वकभावनाबलतः स्पष्टवह्निप्रत्ययः किं वह्नेरप्युत्पन्नः, [2] तथाभूतभावनामात्रादेव वा।

प्रथमपक्षे विसंवादश्च बहुलमुपलभ्यते इति यदुक्तं तद्दुर्भाषितम्। साक्षादर्थादुत्पन्नस्यापि विसंवादसम्भवेऽन्यस्यापि प्रत्यक्षस्य हस्तकत्यागप्रसङ्गात्।

द्वितीयपक्षे तु भावनाप्रकर्षमात्रस्यार्थादनुत्पन्नस्य बहुलं विसंवादोपलम्भेऽपि भावनार्थाभ्यां साक्षादुत्पन्नस्य योगिप्रत्यक्षस्यापि विसं[3]वादसम्भव इति स्ववीयसी भ्रान्तिः।

ननु यदीन्द्रियं विनापि भावनार्थाभ्यां योगिज्ञानमुत्पद्यते, तर्हि पर्वते भावनावह्निभ्यां वह्निज्ञानमुत्पद्यतामविसंवादि। विसंवादश्च बहुलमुपलभ्यत इति चेत्।

न। साक्षाद्वह्नेरुत्पादे सति विसंवादाभावात्। केवलमुत्पाद एव दुरापः। नहि वयं प्रमाणदृष्टवस्तुभावनासहितं मनइन्द्रियम[4]र्थस्वरूपग्राहिज्ञानं जनयतीति ब्रूमः, अपि स्वसहृष्टिलक्षणाविद्यापरिपन्थिक्षणिकनैरात्म्यलक्षणसर्ववस्तुतत्त्वभावनासहितम्। न च वह्नित्वं सर्ववस्तुतत्त्वम्। किन्तु क्षणिकनैरात्म्यमेवेति क्षणभङ्गप्रसाधनतः प्रतिपादितमिति। किञ्च। स्वमनीषापरिकल्पितः खल्वयमनुमितभावितवह्निविषयविशदः प्रत्ययः न पुनरस्य लोके सम्भवः। तथाहि निष्प्रयोजनमनुन्मत्तो न कश्चिद्भावयति। प्रयोजनं च शिशिरभरमन्थरकायकाण्डस्यापि दाहादिमात्रमेव, तच्चानुमितेनैव वह्निना तद्देशोपसर्पणात् सिध्यति। अनुपसर्पणे भावनावैयर्थ्यम्। पुरस्तात्तु भाविते परिस्फुरति। तदयपिक्षया भ्रान्तिः। प्रासङ्गिकस्येदंस्यादुपहास्यमन्यस्य क्षतात्मनो बुनीं[6]तिपूतिपदवीभक्षणाध्मातजरद्गोमायोरुद्गार इव सतामसह्यः।

यदपि ततोऽनन्तरमाशंक्यार्थस्यालम्बनप्रत्ययत्वमिन्द्रियापेक्षित्वेन व्याप्तमिति प्रसाधितम्, तत्पूर्वमेव प्रत्युक्तम्। तथा भावनायाश्चेत्याद्याशंक्यार्थस्यालम्बनप्रत्ययत्वमशक्यावगममिति यदुक्तं तदप्यसम्बद्धम्।

चक्षुरिन्द्रियस्याप्यर्थमन्तरेण द्विचन्द्रके गन्धुकादौ विशदभ्रान्तज्ञानज[11b.1] ननसामर्थ्यमुपलब्धमित्यर्थसहितमपि केवलमेव समर्थम्। अतो घटादेरप्यालम्बनप्रत्ययत्व-

मशक्यावगममिति इन्द्रियप्रत्यक्षमपि प्रतिहतं स्यादिति । तथा, अपि चालम्बनप्रत्यया अपि त एव मुच्यन्त इत्यादिर्न पुनर्विकल्पनिर्माणप्रतिबन्धतेति पर्यन्तो व्यर्थः । अस्माभिरेवं-विधस्य प्रस्तुतेऽनभ्युपगतत्वात् । अतएव तस्माद्भावनाप्रकर्षमात्रजत्वात्, अर्थाव्यभिचा-रनि[2]यमाभावात्, विशदाभमपि संशयाक्रान्तत्वात्, अप्रमाणमप्रत्यक्षं चेति साम्प्रत-मित्युपसंहारोऽपि चिक्कारः । सर्वेषामेव हेतूनामसिद्धत्वात् । भावनाबलजस्यार्थादप्युत्पत्ते-रिन्द्रियप्रत्यक्षवत् । सदर्थप्रकाशनं बुद्धेः स्वभाव इत्याद्यस्माकमपिमनोहरम् । भावनायाश्च सामान्येन स्फुटाभज्ञानहेतुत्वं साध्यते । प्रमाणो[3]पपन्नचतुरार्यसत्यविषयनिष्ठायां तु सामर्थ्यात् प्रत्यक्षप्रमाणहेतुतापि साध्यते । अत एव कामिनीप्रतिभासस्याप्रमाणत्वेऽप्यप्रत्य-क्षत्वेऽपि स्फुटाभत्वस्य साध्यधर्मसामान्यस्य सम्भवात् न विरुद्धो हेतुः, नापि दृष्टान्तस्य साध्यशून्यतेति । न च नैरात्म्यदृष्टिः सम्भवद्बाधा, अर्थादुत्पत्तेरभूतार्थत्वाभावात् ।

श्रुतानुमितविषयं प्रत्य[4]क्षं न सम्भवतीत्यप्ययुक्तम् । आगमानुमानयोर्द्विविधो विषयः । ग्राह्योऽध्यवसेयश्च । तत्र ग्राह्यः स्वाकारः । अध्यवसेयस्तु पारमार्थिकवस्तुस्वलक्ष-णात्मा । अस्य च परोक्षत्वेऽनुमानसामग्रीसम्भवेऽनुमानविषयत्वम् । प्रत्यक्षसामग्रीसम्भवे च क्रमेण प्रत्यक्षविषयत्वं दृष्टमेव । तत्सिद्धमित्याद्युपसंहारोऽपि पर्याकुल एव । अप्रमाण[5]त्वादिति हेतुश्च प्रथमोऽसिद्धः । भावनाबलजस्यार्थादप्युत्पत्तेः, प्रमाणशक्तिसम्भवात् । इन्द्रियप्रत्यक्षवत् । भावनाबलजत्वादिति । द्वितीयस्तु सन्दिग्ध-व्यतिरेकित्वादनैकान्तिकः । तथा यथानुमितभावितवह्निविषयविशदज्ञानमिति दृष्टान्तोऽ-प्यसम्भवीति प्रतिपादितम् । भवतु वा, तथापि योगिज्ञानस्य तेन सह तुल्यहेतुत्वमसिद्धम् । त[6]द्धि प्रमाणदृष्टवस्तुभावनामात्रजम् । योगिज्ञानं तु अविद्याप्रतिपक्षसर्ववस्तुतत्त्वभावना-विषयाभ्यामुत्पन्नमिति महान्तमपि विशेषमसौ दुर्मतिप्रपातपतितो नावगाहत इत्युपेक्षणीयः ॥

न्यायप्रकीर्णे तु मार्गस्तावत् प्रमाणपरिशुद्धो न भवतीत्युक्तं यत्, तत् तत्प्रसाधकप्रमाणेनैव प्रत्युक्तम् ।

यच्चापि चेत्याद्यारभ्य योगिज्ञानं निर्विषयं प्रसक्तमित्युक्तम् [12a.1]तत्र केयं निर्विषयता नाम । किं विकल्पाकारनिवृत्तौ निराकारता, अर्थाकाराद्विसदृशाकारता, अथ तदाकारत्वेऽपि तद्वस्तुसंस्पर्शिता ।

न तावत्प्रथमः पक्षः क्षमः । ज्ञानस्य निराकारतानुपपत्तेः ।

नापि द्वितीयः । कामिन्यादिभावनायास्तदाकारस्यैव विशदस्य दर्शनात् ।

न च तृतीयः । अर्थसमर्पिताकारसंस्पर्शमपास्यान्यस्यार्थसंस्पर्शस्यायोगात् । तथाचोक्तम् ।

अ[2]र्थेन घटयत्येनामित्यादि [प्र.वा.II.305].

तयोश्चैकत्वेनाध्यवसायाद्बाह्य एव प्रवृत्तिनिवृत्ती, व्याव[1]हारिकस्य स्फुटीभावोऽपि बहिरभि-मतस्य पर्यन्ते विकल्पोपादेयलक्षणस्यैव स्फुटस्योदयः । तावतैव स विषयस्तेन साक्षात्कृत इति व्यवहारः केवलमर्थादप्युत्पत्तौ । अन्यथा व्यभिचारादप्रामाण्यम् । न च विकल्पोपदर्शित-मपि रूपमवस्तु ज्ञाना[3]त्मकत्वात् । अनात्मकत्वे प्रकाशायोगात् । तद्भावनैव चार्यभावना, तत्स्फुटीभाव एव बाह्यस्फुटीभावः, प्रकारान्तरेण बाह्यस्पर्शायोगात् । एतेन [2]यत् पारमार्थिकमित्यादि न सर्वज्ञसिद्धिरितिपर्यन्तं प्रत्युक्तम् ।

---

1, व्याव° Ms. 2. f 8a.5—8b.1

यच्चापि चेत्यादि[1] न युक्तं पश्याम इतिपर्यन्तेन दूषणमुक्तम्, तदप्यसङ्गतम्। तथाहि। यादृश एव भाव्यग्राही प्रत्ययः प्रथमो निरन्वयो[4] निरुद्धस्तादृश एवापर उत्पद्यत इति नियमनिश्चयकारणं न किञ्चिदस्ति यच्चैवैतादृस्पर्शाविन्यत्, क्षणिकत्वा- दिति चेत्।

ननु क्षणिकत्वं स्थायितया विरुध्यते न विसदृशोत्पादेन, तद्धि प्राचीनं निरन्वयनिरोधे यथा सदृशक्षणान्तरमारभते तथा स्वहेतुगतसामर्थ्ययोगात् कार्योत्पादानुमेयाद् यदि विशेष- क्लेशविशिष्टं क्षणान्तरमुत्पादयति, तदा न काचित् क्षतिः। नहि भवत इव भावस्यापि क्षणिकतायां प्रद्वेषो नाम। तस्माच्च क्षणिकत्वोत्तरविशिष्टक्षणजनकत्वयोर्विरोध इति नापार्थकोऽभ्यासः।

यच्चेदं किञ्चेत्यादिना क्षणिकत्वे चित्तमविक्षिप्तमावेदितम्, तदप्यसाधु, नैरात्म्या- दितत्त्वपरा[ङ्]मुखस्य सर्वस्यैव विक्षिप्तत्वात्। भावनाबलेन तत्त्वसाक्षात्कारिणः समाहि[6]तत्वात्। अथ च तत्त्वसाक्षात्क्रियालाभात् ग्राहकाकाराद्यग्रहसम्भवात्[च] व्याव- हारिकमपि विक्षिप्तमस्ति चित्तम्। यतो ममैव दोषक्षयो भावीति मार्गाभ्यासप्रवृत्तिरव्या- हतेति। परमार्थतः प्राप्यादीनामभावेऽपि तत्संकल्पस्यैवानाद्यविद्याप्रभावितस्य सर्वत्र प्रवर्त- कत्वात्। अतएव मार्गसत्याभ्यासात् सिद्धः सर्वज्ञः॥

न्यायभूषणस्यापि योगाचारापेक्षया दूष[12b.1]णमप्रस्तुतम्। बहिरर्थाभ्युपगमेनैव साधनप्रक्रमात्। यच्चोक्तम्।

तथाप्यतीतानागतविषयत्वं कथं न ह्यसतः कश्चिदाकारोऽस्तीति।

तदेतत् प्रस्तावानवगाहनफलम्। उपयुक्तसर्वज्ञाधिकारेण हि सर्वक्षणिकनिरात्मकवस्तु- भावनोपक्षेपः। न सर्वसर्वज्ञापेक्षया। ततोऽतीतानागतमप्रतीयमानमपि न बाधकम्। ताव- तैव दुःखनिरोधसिद्धेः। परस्मै च क्षणिकत्वादिनि[ष्ठ–2]कस्य देशनावतारात्। न च सर्वसर्वज्ञहस्तकत्यागः। तथाहि चतुरार्यसत्यसाक्षात्कारप्राप्तौ निरावरणान्तःकरणस्य कारु- ण्यातिशयात्। सर्वाकारपरार्थपरतया सकलगोचरचारिणि चेतसि चिरविकृतोत्साहस्य तादृगुपायविशेषाधिगमो भविष्यति, यमनुतिष्ठतस्तदुत्पत्तिमन्तरेणापि देवताधिपत्यात् सत्य- स्वप्नवत्। [3] प्रतिपरमाणुसर्वविषयं यथा देशकालाकारप्रत्ययस्यानुकारि स्फुटतरं ज्ञानमुदियात्, तदा न तावद्वस्तुव्यभिचारकृतं विसंवादित्वं, वस्तूनामेव प्रतिभासनात्। उत्पत्तिसारूप्याभ्यां वेद्यस्थितिरिति तु पृथग्जनापेक्षया। योगिनस्तु सारूप्यमात्रेणैव ग्रहणमिति न्यायः।

यद् वार्तिकम्।

अविशुद्धधियः प्रति।
ग्राह्यग्राहकचिन्तेयमचिन्त्या [4]योगिनां गतिः। इति।
[प्र. वा. II. 532]

तदेवं भाविभूतयोरजनकयोरपि योगिज्ञाने स्फुरणमवाच्यम्। [भाविभूतयोस्तर्हि यदि स्वरूपस्य स्फुरणं, वर्तमानतैव स्यात्। अथ स्वरूपमसन्निहितं ज्ञानमेव तदाकारमिति निरा-

---

1. f 8b.1—4.

लम्बनं नियमेन । तदपि नास्ति । यस्मादसन्निहितेऽप्यर्थे भावनाबलात् तद्देशकालाकारानु-कारि विज्ञानं कथमनालम्बनम् । त[5]थात्वेनाध्यवसायाच्च, अध्यवसितकालविशिष्ट-स्यैव सत्यस्वप्नवत्तस्य प्राप्तेः ।

यद् भाष्यम् ।

यथा स दृष्टः शरदादिकालयुक्तस्तथा तस्य न बाधितत्वम् ।
तत्कालयुक्तस्तु न तेन दृष्टस्तथाऽप्रतीतावपि नास्ति दोषः ॥

ज्ञानमात्रस्य तु तत्त्वतः स्फुरणाच्च न वर्तमानताप्रसङ्गः सङ्गतः । तथा क्षणिकत्वपक्षेऽपि एकत्वाध्यारोपसामर्थ्यान्न व्य[6]वहारिकं प्रति प्रमाणस्य काचित् क्षतिरिति शास्त्रे प्रपञ्चितम् ।

यदपि किञ्चेदमपि वक्तुमुचित[1]मित्याद्यारभ्य भावनाबलजस्यानुमानपूर्वकत्वेऽपि प्रत्यक्षपूर्वकत्वेऽपि व्यभिचाराभिधानम्, तदर्थादपि भावनाबलजस्य साक्षादुत्पत्तिस्वीकारा-दपहस्तितम् । यथेन्द्रियजस्यापि द्विचन्द्रादिज्ञानस्यार्थादनुत्पत्तेरप्रामाण्यम् । अर्थेन्द्रिया-भ्यामुत्पत्तौ तु प्रामाण्यमेवं प्र[13a.1]माणपूर्वकस्यापि भावनामात्रादुत्पन्नस्याप्रामाण्यम् । भावनार्थाभ्यामुत्पन्नस्य तु प्रामाण्यम् ।

यदि योगिज्ञानस्यार्थादुत्पत्तिः, प्रमाणपूर्वकत्वापेक्षया न किञ्चित्प्रयोजनमिति चेत् । न । देशकालवस्तुविशेषमपास्य सामान्येन सर्वदिक्कालवर्तिवस्तुमात्रं क्षणिकनिरात्मकमित्य-निश्चये महाप्रयाससाध्यपुरुषायुषव्यापिन्यां भावनायामेव प्रवृत्तेरभावात् । न च [2] हस्तिको हव्याशनमनुमाय स्फुटीकरोति येन प्रत्यक्षान्तरत्वप्रसङ्गः । असामर्थ्यवैयर्थ्याभ्यां तदसम्भवप्रतिपादनात् ।

यदप्युक्तं योगिनो ज्ञानमिन्द्रियज्ञानादभिन्नं भिन्नं वा । तत्र प्रथमपक्षे तावन्न वस्तुदोषः । तादृक्पुरुषविशेषस्य सिद्धत्वात् । व्यवस्थादूषणमपि नास्ति । साध्यतयैव तादृग्-दशाविशेषस्य लो[3]कातिक्रान्तातिशयस्य परमपुरुषार्थरूपस्य साधन-विशेषप्रतिपादनाय पृथग्जनसाधारणेन्द्रियज्ञानाद्भेदेन निर्देशात् । परम-पुरुषार्थविषयत्वाभावादेव च रसायनादिसंस्कारजस्यापि ज्ञानस्य न प्रत्यक्षान्तरता । भेद-पक्षेऽपि न तावत् स्थैर्येतरस्फुरणकृतोपालम्भसम्भवः । इन्द्रियज्ञानेनापि वस्तु सर्वात्मना गृह्णता तद्रूपस्यैव ग्रहणात् । अध्यवसायो हि पूर्वं दुर्लभः । इदानीं तु भावनाबल-निर्दलितविद्ये चित्तसन्ताने सोऽपीन्द्रियज्ञानेन जन्यत इति विशेषः ।

ननु योगिनो मनोविज्ञानेन्द्रियज्ञानाभ्यां पश्यत आकारद्वयस्फुरणप्रसङ्ग इति चेत् । सत्यम् । सत्यज्ञानाकारस्तावत् वस्तुनो न भिन्नदेशोऽन्यतरभ्रान्ति[5]प्रसङ्गात् । अतस्ता-वाकारावप्रतिमौ कया गत्या स्फुरत इति को निर्णेतुं क्षमः । यदाह[3]

अचिन्त्या योगिनां गतिरिति ।

सर्वथा तु न योगिज्ञानस्य क्षतिरिति सिद्धम् । तदेवं कारणानुपलम्भादपि न सर्वज्ञताऽ-भावः ।

1. *f* 9a.1. 2. *f* 9a.5. 3. *cf.* NVTT p. 6.

ननु यदि नाम युष्मदभिमतस्यानुमानस्य न बाधकम्, तथाप्यस्येवानुमानं बाधकम्। तथाहि शक्यमिदमभिधातुम्।

सुगतो[1]ऽसर्वज्ञः।
ज्ञेयत्वात्, प्रमेयत्वात्, सत्त्वात्, पुरुषत्वात्, वक्तृत्वात्, इन्द्रियादिमत्त्वादित्यादि।
रथ्यापुरुषवत्।

तथाच बृहट्टीका।

यस्य ज्ञेयप्रमेयत्ववस्तुसत्त्वादिलक्षणाः।
निहन्तुं हेतवः शक्ताः को नु तं कल्पयिष्यति॥

कारिकापि।

प्रत्यक्षाद्यविसंवादि प्रमेयत्वादि यस्य च।
सद्भाववारणे शक्तं को नु तं कल्पयिष्यति॥

अत्रोच्यते। किमेते ज्ञेय[13b.1]त्वादयः सर्वज्ञत्वेन साक्षाद्विरुद्धाः परम्परया वा। अविरुद्धविधाने प्रतिषेधायोगात्। स च साक्षाद् विरोधः परस्परपरिहारस्थितलक्षणो वा, भावाभाववत्। सहानवस्थानलक्षणो वा, दहनतुहिनवदिति।

न तावदाद्यः पक्षः। यद्व्यवच्छेदनान्तरीयको यस्य परिच्छेदस्तयोरेव परस्परपरिहारस्थितलक्षणो विरोधः। न च ज्ञेयत्वादि सर्वज्ञत्वव्यवच्छे[2]देन स्थितम्। किं तर्हि। अज्ञेयत्वादिव्यवच्छेदेन। तथा सर्वज्ञत्वमसर्वज्ञत्वव्यवच्छेदेन, न तु ज्ञेयत्वव्यवच्छेदेन।

नापि द्वितीयो विरोधः। यस्य ह्यविकलकारणस्य भवतो यत्सन्निधानादभावस्तयोरेव सहानवस्थानलक्षणो विरोधः। न च सर्वज्ञत्वं प्राक् प्रवृत्तं अविकलकारणं दृष्टं येन पश्चाज् ज्ञेयत्वादिसद्भावे निवर्तत इति [3] स्यात्। तथात्वे सति देशादिनिषेध एव भवेन्न तु सर्वथोच्छेद इति।

7.

न च परम्परया विरोधः। सहि भवन् निषेध्यस्य सर्वज्ञत्वस्य व्यापकविरुद्धत्वात्, कारणविरुद्धत्वात्, कार्यविरुद्धत्वात्, स्वभावविरुद्धकार्यत्वात्, व्यापकविरुद्धकार्यत्वात्, कारणविरुद्धकार्यत्वात्, कार्यविरुद्धकार्यत्वात्, स्वभावविरुद्धव्याप्तत्वात्, व्यापकवि[4]रुद्धव्याप्तत्वात्, कारणविरुद्धव्याप्तत्वात्, कार्यविरुद्धव्याप्तत्वाद् वा भवेत्। तत्र सर्वज्ञत्वस्यासत्त्वात्, व्यापककारणकार्याणामसिद्धेस्तद्विरुद्धकार्यव्याप्याभावात्। न प्रमेयत्वादयः सर्वज्ञत्वेन परम्परयापि विरुद्धाः।

ननु वक्तृत्वं विरुध्यत एव सर्वविषयनिर्विकल्पज्ञानविरुद्धविकल्पकार्यत्वाद् वक्तृत्वस्य। नैतद् युक्तम्। सविकल्पा[5]विकल्पयोर्युगपद्वृत्तेर्विकल्पकत्वेन सर्वज्ञस्याविरोधात्। 9/5ए

कस्तर्हि पृथग्जनादस्य भेद इति चेत्। उच्यते। यथा मायाकारो निर्मिताश्वादिविषयं विज्ञानं निर्विषयत्वेन निश्चिन्वन्नभ्रान्तः, तदन्यस्माच्च श्रेष्ठः, तथा भगवानपि शुद्ध-

1. स्वगतो Ms.

लौकिकविकल्पसम्मुखीभावेऽपि न भ्रान्तो नापि पृथग्जनसमान इति। ततश्च निर्विकल्पक-सर्वज्ञज्ञा[6]नविकल्पयोर्विरोधाभावाद् वक्तृत्वं सर्वज्ञत्वेन सहाविरुद्धमेव।

एतेनैतदपि निरस्तम्। यदाह काशिकाकारः, समाधेर्व्युत्थायोपदिश्यत इति चेत्। नाव्युत्थितस्य ह्यभिलापिनी प्रतीतिर्भ्रान्तिभावितमप्रमाणं भवेदिति।

यदप्युक्तं बृहट्टीकायाम्।

यदा चोपविशेदेकं किञ्चित्सामान्यवक्तृवत्।
एकदेशज्ञगीतं तत्स्यात्सर्वज्ञभाषितम्॥

तदपि निरस्तम्। विक[14a.1]ल्पेनैकस्य कस्यचिदाभिमुखीकृत्योपदेशेऽपि निर्विकल्पेन सर्वमवबुध्यमानस्य वचनानां सर्वज्ञभाषितत्वादेव।

यत्पुनः कारिकायामुक्तम्।

सान्निध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव।
निश्चरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः॥
एवमाद्युच्यमानं हि श्रद्दधानस्य शोभते।
कुड्यादिनिःसृतत्वात्तु नाश्वासो देशनासु नः॥
किन्नु बुद्धप्रणीताः स्युः किंवा कैश्चि[2]द् दुरात्मभिः।
अदृश्यैर्विप्रलम्भार्थं पिशाचादिभिरीरिताः॥

[श्लो. वा. I. 139-40]

बृहट्टीकायामपि।

तस्मिन् ध्यानसमाधिस्थे चिन्तारत्नवदास्थिते।
निश्चरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः॥
ताभिर्जिज्ञासितानर्थान् सर्वान् जानन्ति मानवाः।
हितानि च यथायोगं क्षिप्रमासादयन्ति ते॥
इत्यादि कीर्तमानं तु श्रद्दधानस्य शोभते।
वय[3]मश्रद्दधानास्तु ये युक्तीरर्थयामहे॥
कुड्यादिनिःसृतानां च न स्यादाप्तोपदिष्टता।
विश्वासश्च न तासु स्यात्केनैताः कीर्तिता इति॥
किन्नु बुद्धप्रणीताः स्युः किंवा ब्राह्मणवञ्चकैः।
क्रीडद्भिरुपदिष्टाः स्युर्दूरस्थप्रतिशब्दकैः॥
किं वा क्षुद्रपिशाचाद्यैरदृष्टैः परिकल्पिताः।
तस्मान्न तासु विश्वासः कर्तव्यः प्रा[4]ज्ञमानिभिः॥

एतदप्यनभ्युपगमेनैव निरस्तम्। शुद्धलौकिकविकल्पसंमुखीभावेनैव तस्य देशकत्वाभ्युपगमादिति॥

अथवा यथा चक्रस्योपरतेऽपि दण्डप्रेरणाव्यापारे पूर्वावेध[1]वशाद् भ्रमणम्। एवं भगवति प्रत्यस्तमितसमस्तविकल्पजालेऽपि स्थिते यदि पूर्वप्रणिधानाहितसततसमाभोगवाहिनी देशना स्या[5]त्तदा को विरोधः। विवक्षाभावे कथं वचनप्रवृत्तिरिति न वक्तव्यम्। तदभावेऽपि

1. वेधवशा Ms.

निद्रायस्य ततस्तत्रव्यक्तवचनसन्दर्शनात्। वचनमात्रस्य विवक्षया व्याप्तेरभावात्। तस्माद् यथा पूर्वाभ्यासतो झटिति प्रबोधितस्यारिणा प्रहारविधानेनानुरूप एव प्रक्रमः शस्त्रोद्धरणादिकः, तथा सर्ववेदिनोऽपि सकलाः कलाः इत्य[6]नाकुलम्।

यथाहालंकारः।

शत्रुसान्निध्यमात्रेण प्रवर्तन्तेऽविकल्पतः।
प्रागेव तन्निराकारिप्रक्रमाः कोपनिर्मिताः॥

यत्पुनरुक्तम्। पिशाचादिकृतशंकया नात्राश्वासः सतां युक्त इति। तदसङ्गतं, यतः

सम्भिन्नालापहिंसादिकुत्सितार्थोपदर्शनम्।
क्रीडाशीलपिशाचादेः कार्यं तासु न विद्यते॥
प्रमाणद्वयसंवादि मतं तद्विषयेऽखिले।
[14b.1] यस्य बाधा प्रमाणाभ्यामणीयस्यपि नेक्षते॥
यथात्यन्तपरोक्षेऽपि न पूर्वापरबाधितम्।
करुणादिगुणोत्पत्तेः सर्वपुंसां प्रवर्तकम्॥
सर्वानुशयसन्दोहप्रतिपक्षाभिधायकम्।
निर्वाणनगरद्वारकपाटपुटभेदनम्॥
तच्चेत् क्रीडनशीलानां रक्षसां वा वचो भवेत्।
त एव सन्तु सम्बुद्धाः सर्वतल्लक्षणस्थितेः॥

न च नाम्नि विवादः। न च नामनिवृत्तौ वस्तु निवर्तते। [2] प्रत्युत वेदस्यैव क्रीडनशीलपिशाचादिप्रणीतत्वं युक्तं सम्भावयितुम्। येन गोसवादिषु यागेष्वगम्यागमनादयोऽसत्यसमुदाचाराः सम्प्रकाशिताः। लोकप्रसिद्धिश्च।

त्रयो वेदस्य कर्तारो मुनिभण्डनिशाचराः। इति।

अलमतिनिर्बन्धेन।

ननु सर्वज्ञत्वं वीतरागादित्वेन व्याप्तमिष्यते। तद्विरुद्धं च रागादियोगित्वं, त[3]त्कार्यं च वचनम्।

तदेतद् व्यापकविरुद्धकार्यभूतं वचनं सर्वज्ञाभावं साधयति परम्परया विरुद्धत्वादिति चेत्। न, रागादीनां वचसश्च कार्यकारणभावासिद्धेः। तथाहि। वचनविशेषो रागादिकार्यम्, यो रागेणैव जनितः, वचनमात्रं वा।

तत्र न तावत् प्रथमः पक्षः। तादृशस्य वचनस्य निश्चयोपायासम्भवात्। [4] असभ्यमथुनाचारप्रकाशकं वचनं तत्कार्यमिति चेत्। न। अभिप्रायस्य दुर्लक्ष्यत्वात्। विरक्तोऽपि रक्तवच्चेष्टते, रक्तोऽपि विरक्तवदित्यभिप्रायो दुर्बोधः। ततश्च विशिष्टव्यवहारस्य सांकर्येण न तत्रैकान्तेन रागानुमानं युज्यते। नापि वचनमात्रं रागादिकार्यम्। असम्मुखीभूतरागादयोऽपि हि स्वाभिमतदेवतास्तु[5]तिविधाने मात्रादिगुरुजनसम्भावनादौ च वचनमात्रमुच्चारयन्तः समुपलभ्यन्ते। न च यदभावे भवति तस्य तत्कार्यतोच्यते। अतिप्रसङ्गात्। रागादियोग्यता तर्हि वचसः कारणं, तया विनोपल[1]खण्डादे[1] वचनस्यादर्शना-

1. खण्डलादौ Ms.

दिति चेन्न । कारणगुणवक्तुकामते हि वचनस्य हेतुः । तदभावादेवोपलक्ष[6]ण्डादौ निवर्तते, न रागादियोग्यताया अभावात् । यदि कारणगुणादिसकलतदन्यकारणभावेऽपि रागादियोग्यताऽभावान्नोत्पद्यते वचनमिति सिध्येत्तस्याः कारणत्वम् । उपलख[1]ण्डादौ तु वक्तुकामता नास्ति । तत्कथं तत्कारणत्वं वचसामिति । एवं तर्हि वक्तुकामतैव रागोऽस्तु । इष्टत्वान्न किञ्चिद् बाधितं स्यात्, नाम्नि विवादाभावात् । परमार्थ[15a.1]तः पुनर्नित्यसुखात्मात्मीयदर्शनाक्षिप्तं साश्रवविषयं चेतसोऽभिष्वङ्गं रागमाहुः ।

निष्पन्नसर्वसम्पत्तेर्विवक्षापि न युज्यत इति चेत् । अदोषोऽयम्, परार्थत्वाद्विवक्षायाः । वीतरागेऽर्थासङ्गाभावात् ।

कथं परार्थापि प्रवृत्तिरिति चेत्, न । आसङ्गमन्तरेण करुणयापि प्रवृत्तेः ।

सैव राग इति चेत् । इष्टत्वाददोषः ।

रागस्य तु स्वरूपमुक्तम् ।

कारुणिकस्यापि निष्फलारम्भो [2] न युक्त इति चेत् । न । परार्थस्यैव फलत्वात् । इष्टलक्षणत्वात् फलस्येति यत्किञ्चिदेतत् ।

ननु निर्विकल्पस्य भगवतः कथं तस्यामवस्थायां करुणासम्भवः । दुःखविकल्पप्रभवा हि करुणेत्यन्वयव्यतिरेकाभ्यामन्यत्वेन निश्चितम् ।

ततश्च कारणाभावात् कथं कार्यसम्भव इति चेत् । न । यथा कुम्भकारनिवृत्तावपि स्वसन्तानमा[3]त्रभाविनी घटादिस्थितिस्तथोत्थापकविकल्पाभावेऽपि सम[न]न्तरप्रत्ययबलादनालम्बनकरुणाप्रवृत्तेरवार्यत्वात् ।
यदाहुर्गुरवः ।

सत्तारोपकृतोऽपि भावनवशात् काठिन्यमापत्तथा
शैथिल्येऽपि यथाऽस्य दुःखहतये सान्द्रस्तथैव श्रमः ।
उत्पादे तु फलस्य हेतुनियमो नो तु प्रबन्धस्थितौ
तस्माद् दुःखदृशः क्षयेऽपि [4] विलसन्मैत्र्याय तस्मै नमः ॥

एतेनैतदपि निरस्तं यदाह कारिकायाम् ।

रागादिरहिते चास्मिन् निर्व्यापारे व्यवस्थिते ।
देशनाऽन्यप्रणीतैव स्यादृते प्रत्यवेक्षणात् ॥

ननु यदि नामैवं वक्तृत्वं सर्वज्ञत्वेन सहाविरुद्धं देहेन्द्रियबुद्ध्यादियोगित्वं तु विरुद्धमेव । सर्वज्ञताव्यापकवीतरागत्वविरुद्धरागादिकारणत्वा[5]द्देहादीनाम् ।

ततश्च प्रतिषेध्यव्यापकविरुद्धकारणोपलम्भात् सर्वज्ञाभाव इति चेत् । उच्यते । देहादीनां हेतुत्वेऽपि नैषां केवलानां सहकारिमात्राणामात्माभिनिवेशलक्षणोपादानकारणविकलानां रागादिजनकत्वमित्यगमका एव देहादयः सर्वज्ञाभावस्य । तस्माज् ज्ञेयत्वादीनामप्यपरपरि[6]कल्पितानुमानतोऽपि सर्वज्ञाभावः ।

1. उपलखण्डादौ Ms.

नापि स्वविकल्पितं शाब्दादिकं भगवतो बाधकम् । तथाहि । यद्यपि तेषां सति प्रामाण्ये-ऽनुमान एवान्तर्भावः । अनन्तर्भावे चाप्रामाण्यमेवेति स्थूलं दूषणमस्ति । तथापि तत्प्रा-माण्यमभ्युपगम्यापि ब्रूमः । यत्तावत् पौरुषेयवचनं तदप्रमाणमेव भवताम् । न च वैदिकं किञ्चिद्वचनं सर्वनरासर्वज्ञत्वप्रतिपादक[15b.1]मुपलभ्यते । प्रत्युत निखिलशाखिनि शाखान्तरे स्फुटतरमेव सर्वज्ञः प्रतिपादितः । तथाहि

स वेत्ति विश्वं न च तस्य वेत्ता

इत्यादिना च सर्वज्ञो वेदे प्रतिपादितः ।

नाप्युपमानात्तदभावः सिध्यति । तथाहि स्मर्यमाणमेव गवादिवस्तु पुरोवर्तिगवयादिसादृ-श्योपाधि गवाद्युपाधि वा सादृश्यमुपमानेन प्रतीयत इति स्थितः । न च सर्वज्ञसन्तानवर्तीनि चेतांसि केनचिद[2]सर्वज्ञेनानुभूतानि । यतः स्मरणेन विषयीक्रियेरन् । परचित्तविदे-रयोगात् । यत् पुनरुक्तं कुमारिलेन ।

नरान् दृष्ट्वा त्वसर्वज्ञान् सर्वानेवाधुनातनान् ।

तत्सादृश्योपमानेन शेषासर्वज्ञनिश्चयः ॥

तदप्ययुक्तम् । अधुनातनसर्वनरासर्वज्ञत्वानिश्चयात् । निश्चये चात्मन्येव सर्वज्ञत्वाभ्युपगम-प्रसङ्गात् ।

नाप्यर्थापत्ति[3]र्बाधिका । यतो दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यत इति अदृष्टार्थ-परिकल्पनमर्थापत्तिरुच्यते । न चासर्वज्ञत्वमन्तरेण सर्वनरेषु कश्चिदर्थो दृष्टः श्रुतो वा नोप-पद्यते यतस्तदर्थापत्त्या परिकल्प्येत । ननु संसारस्य तावदनादित्वं प्रमाणेन प्रतीतम् । तच्च न सर्वज्ञेन ज्ञायते । तज्ज्ञानावधेः परस्तादसत्त्वेऽनादिता[4]ऽतिप्रसङ्गात्, तदन्यथानुपपद्यमानं सर्वभावानामनादित्वं सर्वज्ञाभावं साधयतीति चेत् ।

उच्यते । उपयुक्तसर्वज्ञापेक्षया तावदिदमदूषणम् । तस्यानादित्वाज्ञानेऽपि उपयुक्त-सर्वज्ञत्वाव्याहतेः । सर्वसर्वज्ञस्याप्यभावे साध्येऽसमर्थेयमर्थापत्तिः । तथाहि । यथा संसार-स्यानादित्वे पूर्वपूर्ववस्तुसत्ताया अनवधित्वं [5] तथा सर्वज्ञज्ञानस्यापि पूर्वपूर्ववस्तुसत्ताव्या-पकत्वेनानवधिप्रसरता इति । अज्ञातस्यैकस्यापि वस्तुनोऽनव[1]स्थितेः । सत्यपि सर्वज्ञेऽना-दित्वमुपपद्यमानं न सर्वज्ञाभावमाक्षिपति । ततश्चार्थापत्तिरपि न सर्वज्ञस्य बाधिका ।

न चाभावप्रमाणबाध्यः सर्वज्ञः । प्रमाणपञ्चकनिवृत्तिरभावप्रमाणमिष्यते । तत्र निवृ-त्तिरि[6]ति प्रसज्यवृत्त्या प्रमाणानुत्पत्तिमात्रमभिप्रेतम्, अथवा पर्युदासवृत्त्या वस्त्वन्त-रम्, वस्त्वन्तरमपि जडरूपं ज्ञानरूपं वा, ज्ञानमपि ज्ञानमात्रम्, एकज्ञानसंसर्गिवस्तुज्ञानं वेति विकल्पाः ।

तत्र न तावन्निवृत्तिमात्रमभावप्रमाणमुपपद्यते । तत्खलु निखिलशक्तिविकलतया न किञ्चित् । यच्च न किञ्चित् तत्कथं प्रमेयं परिच्छिन्द्यात्, तद्विषयं वा विज्ञानं जन-[16a.1]येत्, प्रतीतं वा तत्कथमिति सर्वमन्धकारनर्तनम् । यथोक्तम् ।

1. नवधस्थितेः Ms.

नह्यभावः कस्यचित्प्रतिपत्तिः प्रतिपत्तिहेतुर्वा । तस्यापि वा कथं प्रतिपत्तिरिति ।

नापि वस्त्वन्तरतापन्नो जडरूपः प्रमाणाभावः सङ्गच्छते । तस्य प्रमेयपरिच्छेदायोगात् । परिच्छेदस्य ज्ञानधर्मत्वात् । नापि ज्ञानमात्रस्वभावोऽभावः । देशकालस्वभावविप्रकृष्टस्यापि ततोऽभावप्रसङ्गात् । [2] तदपेक्षयापि विज्ञानमात्रत्वात् तस्य । अथैकज्ञानसंसर्गिस्वभावोऽनुमन्यते, तदा क्षतमभावप्रमाणप्रत्याशया, अध्यक्षविशेषस्यैवाभावप्रमाणनामकरणात् । तस्य चास्माभिर्दृश्यानुपलम्भाख्यसाधनत्वेन स्वीकृतत्वात् । दृश्या[1]नुपलम्भश्च भगवदभावसाधनेऽसमर्थ इति पूर्वमेवावेदितम् ।

किञ्च, कः पुनर[3]यं प्रमाणाभावोऽभिमतो भवताम् । स्वप्रमाणगणनिवृत्तिरथ सर्वप्राणिगणप्रमाणनिवृत्तिः, तत्र स्वप्रमाणगणनिवृत्तिर्व्यभिचारिणी । तस्यां सत्यामपि व्यवहितस्यार्थस्यानपह्नवत्वात् । परप्रमाणनिवृत्तिस्त्वसर्वविदोऽसिद्धा । यदाह ।

सर्वादृष्टिश्च सन्दिग्धा स्वादृष्टि[2]र्व्यभिचारिणी ।
विन्ध्याद्रिरन्ध्रदूर्वादिरदृष्टावपि सत्त्वतः । इति

तदेवं नाभावप्रमाणतोऽपि सर्वज्ञनिषेध इति स्थितम् ।

ननु तथापि सद्व्यवहारार्थं साधकमप्यस्य न विद्यते । तथाहि । सर्वविदोऽतीन्द्रियत्वात् न तावदस्मदादिप्रत्यक्षमस्य साधकम् । यथा चास्माभिरसौ नोपलभ्यते तथाऽस्मज्जातीयैरप्यप्रत्यक्षस्वभावनियमात् । न चायं कालान्तरेऽभूदिति च कल्पना युज्यते । यथाहि [5] कालत्वादिदानीन्तनकालवदिति अनेनानुमानेन निराकर्तुं शक्यते, न तथा साधयितुम् ।

कारिका ।

सर्वज्ञकल्पना स्वन्योऽवे वाऽपौरुषेयता ।
तुल्यवत् कल्प्यते येन तेनेदं संप्रधार्यते ।।
सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ।
निराकरणवच्छक्या न चासीदिति कल्पना ।। इति ।
[श्लो. वा. I 116-7]

नाप्यनुमानतः सर्वज्ञसिद्धिः । तत्प्रतिबद्धलिङ्गानिश्चयात् ।

किञ्च । सर्वज्ञसत्तासाधने सर्वो हेतुः त्रयीं दोषजातिं नातिवर्तते । असिद्धत्वं, विरुद्धत्वमनैकान्तिकत्वं चेति । तथाहि सर्वज्ञे धर्मिणि क्रियमाणे न तद्धर्मो हेतुः सिद्धः । तस्यैव धर्मिणः साध्यत्वेनासिद्धत्वात् । सिद्धो वा वैयर्थ्यप्रसङ्गात् । असर्वज्ञे धर्मिणि न सर्वज्ञसिद्धिः । हेतोः सर्वज्ञविपरीतसाधनत्वेन वि[16b.1]रुद्धत्वात् । नापि सर्वज्ञासर्वज्ञधर्मो हेतुः । तस्यानैकान्तिकत्वात् । तस्मान्नानुमानतोऽपि सर्वज्ञसिद्धिः ।

कारिका ।

दृष्टो न चैकदेशोऽस्ति लिङ्गं वा योऽनुमापयेत् । इति ।

नाप्यागमगम्यः । आगमो हि द्विविधः । पौरुषेयो नित्यश्च । तत्र पौरुषेयोप्यागमः तदीयो वा तत्र प्रमाणम्, नरान्तरप्रणीतो वा । न तावत्तदीयः । अन्योऽन्यसंश्रयापत्तेः[3] ।

1. दृश–Ms. 2. दृष्टिव्यभि Ms. 3. पत्तैः Ms.

तथाह्यागमस्य [2] सर्वज्ञोक्तत्वे प्रामाण्यम्। अस्य च प्रामाण्ये सत्यस्मात् सर्वज्ञसिद्धिरिति। नरान्तरप्रणीतस्तु प्रमाणत्वेनानभिमत एवेत्यतोऽपि न सर्वज्ञसिद्धिः।

किञ्च। सर्वज्ञप्रणीताद्वचनात् सर्वज्ञसिद्धौ किमपराद्धं स्ववचनेन। येनातोऽप्यसौ न गम्येत। नापि नित्यागमगम्यः सर्वज्ञः। तथाविधस्य सर्वज्ञप्रतिपादकस्य नित्याग[3]मस्याभावात्। यच्चोपनिषदादौ सर्वज्ञप्रतिपादकवाक्यं तस्यान्यार्थत्वं द्रष्टव्यम्। न च नित्यवाक्यस्यानित्यसर्वज्ञत्वप्रतिपादकत्वम्। निर्विषयत्वप्रसङ्गात्।

किञ्च। यद्यङ्गीकृतो नित्यागमः, किं सर्वज्ञकल्पनया, नित्य एवागमो धर्मे प्रमाणं भविष्यति।

कारिका।

न चागमेन सर्वज्ञस्तदीयेऽन्योऽन्यसंश्रयात्।
न[4]रान्तरप्रणीतस्य प्रामाण्यं गम्यते कथम्॥
न चाप्येवं परो नित्यः शक्यो लब्धुमिहागमः।
दृष्टश्चेदर्थवादत्वं तत्परे स्यादनित्यता॥
आगमस्य च नित्यत्वे सिद्धे तत्कल्पना वृथा।
यतस्तं प्रतिपत्स्यन्ते धर्ममेव ततो नराः॥
[श्लो. वा. I.118-20]

बृहट्टीकापि।

न चागमविधिः कश्चिन्नित्यः सर्वज्ञबोधकः

इत्यादि सप्तचत्वारिंशत् श्लोकाः सप्रपञ्चमेतमर्थं प्रतिपादयन्ति। तदेवमागमतोऽपि न सर्वज्ञसिद्धिः।

• नाप्युपमानप्रमाणसमधिगम्यः। उपमानं हि सदृशग्रहणनान्तरीयकप्रवृत्तिकं असन्निकृष्टार्थगोचरम्। यथा गवयग्रहणद्वारेण गोः स्मरणम्। न च सर्वज्ञसदृशः कश्चिदस्ति।

कारिका।

सर्वज्ञसदृशं कञ्चिद् यदि पश्येम सम्प्रति।
उपमानेन सर्वज्ञं [6] जानीयामस्ततो वयम्॥

नाप्यर्थापत्तितः सर्वज्ञसिद्धिः। दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यते इति अदृष्टार्थपरिकल्पनमर्थापत्तिलक्षणम्। न चात्र प्रमाणप्रतीतं किञ्चिद् वस्त्वस्ति यत्सर्वज्ञमन्तरेणानुपपद्यमानं तत्सत्तामुपनयेत्। तन्नार्थापत्तिरपि सर्वज्ञसाधनी।

न च प्रमाणपञ्चकाभावस्वभावादभावप्रमाणादस्य सिद्धिः, वस्त्वभावसाध[17a.1]नत्वादस्य। प्रत्युतायमेवास्याभावं साधयतीति प्रतिपादितम्। यद्यपीदं कारिकाबृहट्टीकयोरेकपद्या श्लोकैः सर्वज्ञसिद्धये बौद्धस्य साधनमाशंक्य दूषितं तदपि घुणाक्षरमिति ग्रन्थविस्तरभयान्न लिखितम्।

तथाह्येतानि किल सौगतैः सर्वज्ञसाधनाय साधनान्यभिधीयन्ते।

सर्वज्ञोऽस्तीति सत्यम्,

सर्वज्ञोऽयमत्रभवत्, धर्माभ्युपदेशकत्वात्, बुद्धः सर्वज्ञ इ[2]ति चिरप्रवृत्तवृद्धस्मृतेः, प्रथमेतरमशेषशिष्यजनवर्गस्यानेकविधचित्तचैत्तविपरिज्ञानात्, सकलपदार्थराशितत्त्वोपदेशादिति ।

तस्मात् स्थितमेतत् । नातीन्द्रियदर्शी साक्षादस्ति । अपि तु नित्यवचनद्वारेणैव तस्य दर्शनमिति ।

तदेवं सर्वथा सर्वज्ञसाधकप्रमाणासम्भवादयुक्तो बौद्धानां सर्वज्ञसद्व्यवहार [3] इति ।

अत्रोच्यते । अनुमानादन्यतोऽसिद्धः सिद्धसाधनम् । अनुमानादपीत्यसिद्धम् । अनुमानस्य पूर्वमुक्तत्वात् । तत्प्रतिबद्धलिङ्गनिश्चयादित्यादिदूषणप्रबन्धोऽपि प्रतिव्यूढ इत्युपयुक्त[:] सर्वज्ञस्तावत् त्रैलोक्यालोकः सिद्धः ॥

सर्वसर्वज्ञपक्षेऽपीदं साधनम् ।

यत्प्रमाणसंवादिनिश्चितार्थवचनं तत्साक्षात् परम्परया [वा] तदर्थसाक्षात्कारिज्ञानपूर्वकम् ।

यथा वह्नो दाहक इति वचनम् ।

प्रमाणसंवादि निश्चितार्थवचनं चेदम् ।

क्षणिकाः सर्वसंस्कारा इत्यर्थतः कार्यहेतुः । नास्यासिद्धिः । सर्वभावक्षणभङ्गप्रसाधनादस्य वचनस्य सत्यार्थत्वात् ।

नापि विरोधः । सपक्ष भावात् ।

न चानैकान्तिकः । वचनमात्रस्य संशयवि[5]पर्यासपूर्वकत्वेऽपि प्रमाणनिश्चितार्थवचनस्य साक्षात्पारम्पर्येण तदर्थसाक्षात्कारिज्ञानपूर्वकत्वात् । अन्यथा नियमेन प्रमाणसंवादायोगात् ।

अयं च भाष्यकारीयः सर्वसर्वज्ञप्रसाधकप्रयोगः पण्डितजितारिभिः प्रपञ्चित इति तत एव प्रचयतोऽवधार्य इति ।

दुर्वारप्रतिवादिविक्रममनादृत्य प्रमाप्रौढितः[6]
सर्वज्ञो जगदेकबन्धु[1]रवगादेष प्रभावोऽत्र च ।
सन्दुस्थितिभेदिनः कुलगिरेरस्मद्गुरोः किन्त्वयम्
संक्षेपो मम रत्नकीर्तिकृतिनस्तद्विस्तरत्रासिनः ॥
विश्वमस्तु शुभादस्माद् यथेच्छं रतिमन्मथः ।
मञ्जुवज्रश्च पर्यन्ते तत्पादं सत्फलप्रदम् ॥
अहञ्च मञ्जुवज्रः स्यां (?) मञ्जुघोषोऽथ मञ्जुवाक् ।
मञ्जुश्रीर्व[ा]दिराण्मञ्जुकुमारो जिनपूर्वरः ॥

सर्वज्ञसिद्धिः समाप्ता ॥

---

1. जगदेकचक्षुः ? Ms.

# ईश्वरसाधनदूषणम्

[18b.1]

ओं नमस्तारायै ।

सूक्तरत्नाश्रयत्वेन जितरत्नाकराद्भुतम् ।
गुरोर्वागम्बुधेः सम्यक् किञ्चिदाकृष्य लिख्यते ॥
रीतिः सुधानिधिरियं सत्तमे मध्यवर्तिनि ।
विद्वेषिणि विषज्वाला किञ्चिज्ज्ञे तु न किञ्चन ॥

इहैते नैयायिकादयो विवादपदस्य क्षितिधरादेः स्वरूपोपादानोपकरणसम्प्रदानप्रयोजनविभागप्रवीणं सर्वज्ञतादिगुणविशिष्टं पुरुषविशेषमिच्छन्ति । यदाहुः ।

एको विभुः सर्वविदेकबुद्धिसमाश्रयः शाश्वत ईश्वराख्यः ।
प्रमाणमिष्टो जगतो विधाता स्वर्गापवर्गार्थिभिरर्थनीयः ॥ इति ।

स च कथं सिध्यतीति पर्यनुयुक्ताः साधनमिदमाचक्षते ।

विवादाध्यासितं बुद्धिमद्धेतुकम् ।
कार्यत्वात् ।
यत् कार्यं तद्बुद्धिमद्धेतुकम् । यथा घटः ।
कार्यञ्चेदम् ।
तस्माद् बुद्धिमद्धेतुकमिति ।

हेतोः परोक्षार्थप्रतिपादकत्वमननुभूते[3]षु हेत्वाभासेषु न शक्यमावेदयितुम् । हेत्वाभासाश्च पञ्च । यथोक्तम् ।

सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला[1] इति ।

तत्र न तावदयं साध्यसमो हेतुः । असिद्धो हि साध्यसमः कथ्यते । स च संक्षेपतो विमृश्यमानो द्विधा व्यवतिष्ठते । आश्रयासिद्धत्वाद् वाऽसिद्धो यथा सुरभि गगनारविन्दमरविन्दत्वादिति । सत्यपि वाश्रये[4]प्रमाणेन सम्बन्धासिद्धेरसिद्धो यथा अनित्यः शब्दः सावयवत्वादिति । न चाभ्यां प्रकाराभ्यांप्रस्तुतस्य हेतोरसिद्धिरस्ति । क्ष्मारुहादौ धर्मिणि प्रमाणसमधिगते कार्यत्वस्य साधनस्य प्रमाणप्रतीतत्वात् । चिरोत्पन्नपर्वतादौ च धर्मिणि कार्यत्वं सावयवत्वेन हेतुना बोद्धव्यम् । तद् यथा ।

विवादपदं कार्यम् ।
सावयवत्वात् ।
यत्सावयवं[5]तत् कार्यम् । यथा वस्त्रम् ।
तथा चेदम् ।
तस्मात् कार्यमिति ।

1. N. S. I. ii. 4.

ननु सावयवत्वेन हेतुना द्रव्याणामेव कार्यत्वं सिध्यति । न तु तत्समवेतानां गुणकर्मादीनाम् । तेषामवयवसम्बन्धाभावादिति चेत् । सत्यम् । तेषां कार्यगुणादित्वेन हेत्वन्तरेण कार्यत्वमधिगन्तव्यम् । तथाहि ।

जन्मभाजो विवादाध्यासितनित्येतरसमवायिनो गुणादयः ।
कार्यगुणा[6]दित्वात् ।
यो यः कार्यगुणादिः स सर्वस्तथा, यथा घटादिरूपादिः ।
तथा चैते ।
तस्माज्जन्मभाजः । इति ।

कार्यत्वञ्च न स्वकारणसमवायः, सामान्यविशेषो वा बोद्धव्यः, येनास्य प्रध्वंसाव्यापकत्वाद् भागासिद्धता स्यात् । किन्तु कारणाधीनस्वरूपमात्रम् । तच्च शब्दादिष्विव प्रध्वंसादावपि प्रत्यक्षेणाधिगतमिति न तावदयमसिद्धो हेतुः ।

नापि विरुद्धः । तथा [19a.1][1] हि । यो विपक्ष एव वर्तते स खलु साध्यविपर्ययव्याप्तेः साध्यविरुद्धं साधयन् विरुद्धोऽभिधीयते । यथा नित्यः शब्दः कृतकत्वादिति । न चायं तथा । प्रसिद्धकर्तृत्वेषु घटादिषु सपक्षेषु सद्भावदर्शनात् ।

ननु बुद्धिमत्पूर्वकत्वे साध्ये सिद्धसाधनम् । अभिमतं हि परेषामपि कर्मजत्वं कार्यजातस्य, कर्मणश्च चेतनात्मकत्वात्, चेतनाहेतुकत्वाद्वा । तद्धेतुकत्वञ्च जगतः । सर्वज्ञपूर्वकत्वे तु साध्यव्याप्तिः स्वप्नेऽपि नोपलब्धा । दृष्टान्तश्च साध्यहीनः । कुलालादीनामसर्वज्ञत्वात् । विरुद्धता च हेतोरसर्वज्ञपूर्वकत्वेनैव कुम्भादौ कार्यत्वस्य व्याप्तेरुपलब्धेः । न चोपलब्धिमत्पूर्वकत्वमात्रं साधनविषयः, तद्विशेषस्य तु सर्वज्ञपूर्वकत्वस्यातद्विषयस्यापि ततः सिद्धिरिति साम्प्रतम् । तथा[3]हि । यद्यसौ विशेषो न साधनविषयः कथमतस्तत्सिद्धिः, सिद्धं वा कथमविषयः, विषयश्चेत् कथमनुयुक्तोऽयं न स्पृशेदिति चेत् ।

उच्यते । सामान्यमात्रव्याप्तावपि अन्तर्भावितविशेषस्य सामान्यस्य पक्षधर्मतावशेन साध्यधर्मिण्यनुमानात्, विशेषविषयमनुमानं भवत्येव । इतरथा सर्वानुमानोच्छेदप्रसङ्गा[4]त् । तथाहि वह्न्यनुमानमपि न सामान्यमात्रविषयम् । तस्य प्रागेव सिद्धत्वात् । नापि तद्विशिष्टगिरिगोचरवह्नित्वसामान्यस्य, तत्सम्बन्धाभावेन तद्विशेषणत्वानुपपत्तेः । इतरथा गोत्वसमवायादिव गावः शाबलेयादयः । पर्वतोऽपि वह्नित्वसमवायाद् वह्निः प्रसज्येत, अस्त्येव गिरेर्वह्नित्वेन संयुक्तसमवायः स[5]म्बन्ध इति चेत् । तर्हि नाप्रतिपन्नपर्वतसंयुक्तवह्निविशेषमसौ शक्यप्रतिपत्तिरिति वह्निविशेषस्याप्यनुमानम् । तथा[illegible]न्वयबोधप्रसङ्गः । इन्द्रियानुमानेऽप्ययमेव न्यायो द्रष्टव्यः, यथेन्द्रियलक्षणकरणविशेषसिद्धिः । तथाहि तत्रापि नेन्द्रियकारणिका काचित् क्रियोपलब्धा । न खलु छिदादयः क्रिया इन्द्रियसाध[6]ना, वृश्चनादीनामनिन्द्रियत्वात् । न च वृश्चनादिसाधना सम्भवति रूपादिपरिच्छित्तिलक्षणा क्रिया । तस्माद् यथा क्रियात्वसामान्यस्य करणमात्राधीनत्वव्याप्तत्वे पक्षधर्मतावशा-

---

1. One न added on this .page, possibly in the 3rd line. 2. पर्वतेपि Ms.

विनिन्द्रियलक्षणकरणविशेषसिद्धिस्तथेहापि सत्यपि कार्यत्वस्योपादानोपकरणसम्प्रदानप्रयोजनज्ञकर्तृमात्रव्याप्तत्वेऽपि विवादाध्यासितेषु पक्षधर्मतावशा[19b.1]दुपादानाद्यभिज्ञसामान्यस्यसर्वज्ञत्वविशेषस्यैव सिद्धिः। अन्यथा सामान्यस्यापि व्यापकाभिमतस्य न सिद्धिः स्यात्, निर्विशेषस्यासम्भवद्विशेषस्य वा तस्यानुपपत्तेः। असर्वज्ञस्य चात्रादृष्टादिभेदविज्ञानरहितस्याधिष्ठातृभावासम्भवात् सर्वज्ञात्मक एव विशेषो बलादापतति।

ननूपादानाद्यभिज्ञकर्तृमात्रेणेवासर्वज्ञत्वदेहित्वादिभिरपि व्याप्तिर[2]शक्यपरिहारा, व्यभिचारादर्शनस्य समानत्वादिति चेत्। न। सर्वज्ञत्वासर्वज्ञत्वयोर्देहित्वादेहित्वयोर्वा कार्योत्पत्तावनुपयोगात्। नहि सार्वज्ञ्यं कर्तुर्वा योग्यतामुपस्थापयति, असर्वज्ञेभ्यः कुम्भकारादिभ्यः कुम्भादीनामप्रसवप्रसङ्गात्। नाप्यसार्वज्ञ्यं कुम्भकारादेव केयूरादीनामप्युत्पत्तिप्रसङ्गात्। तथा [3] न देहित्वं कार्योत्पत्तावुपयोगि कुम्भकारादेव केयूरादीनामुत्पत्तिप्रसङ्गात्। नादेहित्वं कुम्भकाराद् घटादीनामनुत्पादप्रसङ्गात्। ततश्चोपादानाद्यभिज्ञपूरुषपूर्वकत्वमेव कार्यत्वस्य व्यापकम्। तदेव च बुद्धिमत्पुरुषपूर्वकत्वशब्दवाच्यम्। तेन यद्यपि बुद्धिमत्पूर्वकत्वमात्रं व्याप्तिविषयस्तथापि तद्विशेषस्य सर्वज्ञत्वस्य पक्षधर्मताबलात् प्रतिलम्भ इति विशेषविषयमनुमानम्।

न चोक्तदोषप्रसङ्गः, तस्य साध्यदृष्टान्तयोर्धर्मविकल्पादुत्कर्षापकर्षलक्षणपर्यनुयोगस्य सर्वानुमानसाधारण्येनानुमानमात्रप्रामाण्यप्रतिक्षेपहेतुत्वात्।

एतेन यदुक्तं कणिकायां [1] यदि कुलालादीनां कतिपयोपकरणादिज्ञाने, न सम[5]स्तोपकरणादिज्ञता, तर्हि तेनैव निदर्शनेन ईश्वरस्यापि तदुपकरणादि[2]मात्रज्ञानम्। तन्मात्रज्ञाने न सर्वज्ञतासिद्धिः। कतिपयज्ञो हि तथा सति स्यात्। न वा तन्मात्रज्ञानमपीश्वरस्य बालादिवदित्याह[3] बालोन्मत्तादीनां स्वकार्यप्रयोजनापरिज्ञानेऽपि निरभिप्रायाणां तत्र तत्र प्रवृत्तिदर्शनात्। न च कुलालादयो निदर्शनम् न बालादय इत्यत्र निय[6]महेतुरस्तीति तन्निरस्तम्।

ईश्वरस्य हि कतिपयातीन्द्रियोपकरणादिज्ञाने तत्कारणस्य सर्वत्र समानत्वादशेषोपकरणादिज्ञताया दुर्वारत्वात्। कारणं च तज्ज्ञाने सत्तामन्तरेण नान्यत्। धर्माधर्मादीनां लौकिकप्रत्यासत्तिहेतूनां तत्रासम्भवात्। कारणाभेदे च कार्याभेदः। अन्यथा कतिपयातीन्द्रियज्ञानमपि न स्यात्। यथाहि कु[20a.1]लालादिस्तुल्यदर्शनसामग्रीकेषु नाकिञ्चिज्ज्ञः तथातीन्द्रियोपकरणादिष्वपीश्वरः सामर्थ्यस्याविशेषात्। न च बालोन्मत्तादिनिदर्शनेन कतिपयोपकरणज्ञतानिषेधो युक्तः, बीजदृष्टान्तेन बुद्धिमन्मात्रस्यापि निषेधाभिधानप्रसङ्गात्। तस्माद् यथोपादानाद्यभिज्ञस्यापि सम्भवाद्बीजादिभिर्न व्यभिचाराभिधानम्, तथा बालोन्मत्तादिभिरपीति कु[2]लालादीनामेव दृष्टान्तता युक्तिमती। उपादानाद्यभिज्ञबुद्धिमन्मात्रकार्यत्वयोः साध्यसाधनयोस्तत्र प्रसिद्धत्वात्। तथा ज्ञानवदीश्वरस्य चिकीर्षाप्रयत्नौ नित्यावित्यत्रापि यदभिहितम्—

---

1. न्यायकणिका p. 211. 2. करणमात्रज्ञानेन सर्वज्ञ Ms. 3. बालादिवदित्याह not in Ms.

नित्यौ चेत् किमीश्वरस्य ज्ञानेन चिकीर्षाप्रयत्नोपयोगिना, तयोर्नित्यत्वात् । स्वोत्पत्ता-वुपयोगानपेक्षणादित्यादि[1] ।

तदप्य[3]सारम् । अज्ञातकर्तृत्वानुपपत्तेः । ज्ञानं हि यत्र चिकीर्षाप्रयत्नावनित्यौ तत्र तावुपस्थापयदुपकरणादिकमुपदर्शयति । यत्र तु तौ नित्यौ तत्रोपकरणादिकमुपदर्शयदपि सफलम् । तस्मात् सत्यपि चिकीर्षाप्रयत्नयोर्नित्यत्वे सफलमीश्वरज्ञानं साक्षात्कार्योत्पत्तावनु-पयोग्यपि । अतएव च सोऽयमीदृशो वि[4]शेषो विचारासहः कथं पक्षधर्मताबलादपि साध्य-धर्मिण्युपसंह्रियत इत्यादिरपि प्रलाप एव । ईश्वरज्ञानस्याव्याहतो सर्वज्ञताविशेषस्य दुर्वारत्वात् ।

यदभिहितम्[2] प्रेक्षावतां प्रवृत्तिः प्रयोजनवत्तया व्याप्ता । न चेश्वरस्य प्रेक्षावतो जगन्निर्माणे प्रयोजनमुत्पश्यामः प्राप्तनिखिलप्रापणीयस्य प्राप्तव्या[5]भावात् ।

तदपि सावद्यम्, तदभिप्रायस्य दुर्बोधत्वात्, प्रयोजनाभावासिद्धेः, व्यापकानुपलब्धेः, सन्दिग्धत्वात् । विचित्रा हि पुरुषमात्रस्य चेतोवृत्तिः, प्रागेव विश्वस्य कर्तुः, प्राप्तनिखिल-प्रापणीयस्यापि करुणयापि परार्थप्रवृत्तेः सम्भाव्यमानत्वात् । न चास्य नरकादिनिर्माणप्रवृत्तिः कारुणिकतामुपहन्ति, प्रत्यु[6]त पितुः पुत्रगण्डपाटनवृत्तिरिवाल्पदुःखदानेन प्रभूतदारुण-दुःखापनयनात् करुणातिशयमेव गमयति । प्रेक्षावतामिवास्यापि नियतस्थिरप्रवृत्तिसिद्धेः प्रयोजनानुमितिरेव न्यायप्राप्ता ।

यच्चेदमुदीरितम्[3]—यदि हि सर्वकार्याणामेकः कर्ता स्यात् ततोऽस्य तत्त्वानुपपत्तेः सर्वज्ञता स्यात् । अथ[4] पुनरेकैकं कार्यमेकैकेन कर्त्रा [20b.1] जन्यत इति यो यज्जनयति स तत्कारणमात्रज्ञ एव नतु सर्वज्ञ इति ।

अत्रोच्यते । कार्यलिङ्गाविशेषादेकः कर्ता सदिति ज्ञानाविशेषात् सत्तैकत्ववत् । कुतश्चिल्लिङ्गादनुमितस्य वस्तुनो नानात्वस्य लिङ्गान्तरानुमेयत्वात् । नानात्वमुत्पादयितुं प्रमाणान्तरं वक्तव्यम् । यथात्मनानात्वमवस्थापर्यायैः सुखादि[भिर्नानात्व][5]व्यवस्थापन-मुच्यते । न चेह कर्तुरनेकत्वाधिगमे प्रमाणान्तर[2]मस्ति, एकत्वे तु न प्रमाणान्तर-मन्वेष्टव्यम् । एकस्य कर्तुरभावे बहूनां व्याहतमनसां स्वातन्त्र्येण परस्परविरोधेन मिथः स्वा-नुकूलाभिप्रायानवबोधेन युगपत्कार्यानुत्पत्तिः, उत्पन्न [स्य] वा विलोपादिप्रसङ्गः स्यादिति । एकत्वे तु सिद्धे सर्वज्ञतासिद्धिरविरोधिनी । न चेश्वरस्य सकलक्षेत्रज्ञसमवायिधर्माधर्मज्ञान कारणाभा[3]वेन तदज्ञानम्, तत्समवेतानां ज्ञानचिकीर्षाप्रयत्नानां नित्यत्वात् । न च बुद्धितन्नित्यत्वयोः कश्चिद्विरोधः । न च बुद्धेरनित्यतायास्तत्र तत्रोपलब्धेरीश्वरबुद्धेरपि तथात्वं युक्तम्, रूपादीनामप्यनित्यानां तत्र तत्रोपलब्धेस्तोयादिपरमाणुसमवेतानामपि रूपादीनामनित्यत्वप्रसङ्गात् । परपुरुषसमवेतधर्माधर्माधिष्ठान[4]मप्यस्य युक्तमेव, संयुक्त-संयोगिसमवायस्य सम्बन्धस्य सद्भावात् । संयुक्ताः खल्वीश्वरेण परमाणवः । तैश्च क्षेत्रज्ञाः । तत्समवेतौ च धर्माधर्माविति ।

1. *cf.* K. 213. 2. यदयभिहितम् Ms. 3. K. p. 223. 4. यद Ms. 5. Later addition.

तदेवं कणिकायां वाचस्पतेरीश्वरदूषणं यथासारमुक्ताप्यभ्युदस्तमस्माभिः। अपरं च बुसप्रायमनभ्युपगमप्रसिद्धसिद्धान्तग्रस्तमिह ग्रन्थविस्तरभयान्न लिखितम्। तदेव-[5]मभिमतस्यैव सर्वज्ञतालक्षणस्य विशेषस्य सिद्धेर्नैव विशेषविरुद्धो हेतुः। नापि कर्मभिः सिद्धसाधनमिति स्थितम्॥

न चानैकान्तिकः। स हि असाधारणो वा स्यात्, यथा नित्या पृथ्वी गन्धवत्त्वादिति। अनुपसंहार्यो वा, यथा सर्वं नित्यं प्रमेयत्वादिति। साधारणो वा, यथा नित्यः शब्दः, अस्पर्शवत्त्वादिति।

तत्र न तावदादि[6]मौ पक्षौ, सपक्षसद्भावदर्शनेन प्रतिक्षिप्तत्वात्। नाप्यन्तिमः, अधिगतकर्तृनिवृत्तेर्व्योमादेर्विपक्षाद् व्यावृत्तेरुपलब्धेः।

ननु पुरुषव्यापारमन्तरेण तृणादीनुदयमानानवलोकयन् लोकः कार्यमात्रं पुरुषपूर्वक-मिति व्याप्तिमेव न प्रतिपद्यत इति चेत्। एवं तर्हि प्रसिद्धानुमानस्थितिरपि दत्तजलाञ्जलिः। तत्रापि हि व्याप्तिप्रतीतिकाल एव व्याघ्रा[21a.1]दिपर्याकुलातिदुर्गप्रदेशे वह्नि-व्यापारमन्तरेण धूमं पुरुषव्यापारं विना पूर्वं सिद्धं घटं वा विलोकयन् लोको धूममात्रं वह्नि-पूर्वकं घटमात्रं वा पुरुषपूर्वकमिति व्याप्तिमेव न प्रतिपद्यत इति वक्तुं शक्यत्वात्।

तत्र वह्निपुरुषयोर्देशकालविप्रकृष्टत्वादप्रतिक्षेप इति चेत्। यद्येवं तृणादावपि पुरुषस्य स्वभावविप्रकृष्टत्वादप्रतिक्षेप इति सर्वं समानमन्यत्रा[2]भिनिवेशात्। पुरुषव्यापारपूर्वकता तावन्न प्रतीयते तृणादीनाम्। सा च पुरुषस्यादृश्यत्वादसत्त्वाद् वा न प्रतीयताम्, किमनेन विचारितेन। सर्वथा किञ्चित्कार्यमपूर्वपुरुषपूर्वकमपश्यन्न व्याप्तिं कार्यमात्रस्य पुरुषेण कश्चि-च्चेतनावानवगच्छतीति चेत्। यद्येवं वह्निमात्रपूर्वकता तावन्न प्रतीयते धूमस्य, पुरुष-मात्रपूर्वकता च घटस्य। सा च वह्नेर्देशविप्रकृष्टत्वादसत्त्वाद् वा पुरुषस्य कालविप्रकृष्टत्वा-दसत्त्वाद् वा न प्रतीयताम्। किमनेन विचारितेन। सर्वथा धूममात्रं वह्निव्यापारपूर्वक-मपश्यन् घटमात्रं वा पुरुषपूर्वकमपश्यन्न व्याप्तिमेव धूमस्य वह्निमात्रेण घटस्य पुरुषमात्रेण वा कश्चिच्चेतनावानधिगच्छतीत्यप्युच्यमानं न व[4]क्त्रं वक्रीकरोति। तत् किमनेन प्रसिद्धा-नुमानबलाधिना जात्युत्तरेण।

स्यादेतत्। न सहभावसम्भवयोर्दर्शनादर्शनमात्रेणाव्यभिचारनिश्चयः, अतदात्मनोऽतदु-त्पत्तेश्चाव्यभिचारनियमाभावात्। तदिदं कार्यत्वं सन्दिग्धविपक्षव्यावृत्तिकत्वेनासाधनम्।

अत्रोच्यते। नास्ति विपक्षाद्धेतोर्व्यावृत्तिसन्देहः। धूमानलयोरिव का[5]र्यबुद्धिमतो-रुपलम्भानुपलम्भसाधनस्य कार्यकारणभावस्य सिद्धत्वात्।

कार्यविशेषस्यैव तदुत्पादसिद्धिर्न कार्यसामान्यस्य, यथा धूमादिवर्तिनो वस्तुत्वादे-र्नानलादिजन्यत्वनिश्चय इति चेत्। न, विशेषहेत्वभावात्। उपलम्भानुपलम्भयोस्तदुत्पत्तिसाधन-त्वेनेष्टयोरविशेषात् कार्यविशेषस्येव कार्यसामान्यस्य प्रबोधाय[6]त्यपत्रासिद्धेः। यथा हि कार्यं वस्त्रादुपादानवत् दृष्टं, कार्यान्तरमप्यदृष्टोपादानमुपादानवत् कार्यत्वादुपस्थाप्यते। तथा तदेव कार्यं वस्त्रादि दृष्टकर्तृकमित्यदृष्टकर्तृकमपि कार्यत्वात् कर्तृमदृव्यवस्थाप्यते। उपादानस्येव कर्तुरपि कार्येणानुकृतान्वयव्यतिरेकत्वात्। तस्मात्प्रतिबन्धबलवत्त्वात् सर्वत्रं

कार्यकारणव्यवहारयोः । तस्माद् यथा कार्यं[21b. 1]ञ्च स्यान्निरुपादानञ्चेति न शक्यमाशङ्कितुम् । कार्यमात्रस्योपादानमात्रादुत्पादसिद्धेः । तथा कार्यञ्च भवेदकर्तृकञ्चेति नाशङ्कनीयम् । कार्यमात्रस्य कर्तृमात्रादुत्पादसिद्धेरविशेषात् ।

ननु ब्रूया नाम किञ्चित् । तथापि न कार्यमात्राद् बुद्धिमदनुमानम् । अपि तु कार्यविशेषादेव । यद्दर्शनादक्रियादर्शिनोऽपि कृतबुद्धिः स्यात् । न चानपेक्षिततत्स्वानुना[2]त्रसाम्यात् साध्यसिद्धिर्युक्ता । गोशब्दवाच्यतामात्रेण वागादीनां विषाणित्वानुमितिप्रसङ्गादिति चेत् । तदेतत् स[लो]त्तरमनुत्तरार्हम् । कार्यसामान्यस्यैव व्याप्तिप्रसाधनात् । अपि च का पुनरियं कृतबुद्धिः । किमपेक्षितपरव्या[1]-वसायोऽस्य पुरुषकृतमेतदिति पौरुषेयत्वनिश्चय इति ।

यद्याद्यः पक्षः, स कथं क्षित्यादिषु नास्ति[3] कारणव्यापारात्मलाभलक्षणस्य कार्यत्वस्य कुम्भादिवत् क्षित्यादिष्वविशेषात् । अथ पुरुषेण कृतमिति पौरुषेयत्वनिश्चयः कृतबुद्धिरभिमता, तदापि तादृशी कृतबुद्धिः कस्य नास्तीति वक्तव्यम् । किं कार्यत्वादिति हेतोरविनाभाववेदिन आहोस्वित् तद्विपरीतस्य ।

नाद्यः पक्षः । अविनाभाववेदिनः साध्याप्रतिपत्तेरयोगात् । [4] अथ तद्विपरीतस्य साध्यबुद्धिर्न भवतीति कृतबुद्धिहेतुकत्वमवनितनुमहीरुहादिषु नास्तीति बुद्धिमतोऽनुमानं प्रतिक्षिप्यते ।

नन्वेवं सति सर्वानुमानोच्छेदः स्यात् । सर्वहेतूनामगृहीताविनाभावं प्रति अगमकत्वात् । तस्मान्न कृतबुद्धिहेतुत्वं विशेषः । भवतु वा कश्चिदनिरूपितरूपो विशेषस्तथापि किमनेन । [5] कार्यमात्रस्यैव धूममात्रस्येव व्याप्तिप्रतीतेः । न च कार्यत्वेन हेतुना सह मृद्विकारस्य समकक्षता । तस्य स्वसाध्येन दृश्यकुम्भकारेण सह व्यभिचारस्य शतशो दर्शनात् । कार्यत्वस्य तु दृश्यादृश्यसाधारणेन बुद्धिमन्मात्रेण तद्योगादिति नायमनैकान्तिकः ।।

नापि, प्रकरणसमः । अप्रतिपक्षत्वात् । न ह्यस्य प्रतिप[6]क्षोपस्थापकं धर्मान्तरमस्ति । यथा नित्यः शब्दो वस्तुत्वे सत्यनुपलभ्यमाननित्यधर्मत्वादित्यस्य, अनित्यः शब्दो वस्तुत्वे सत्यनुपलभ्यमाननित्यधर्मत्वादिति प्रतिपक्षकृतं धर्मान्तरमस्ति । न चेदं बाधकं वक्तव्यम् । नेश्वरकर्तृकं जगत् । वस्तुत्वसत्त्वादित्यादि । ईश्वरकर्तृकत्वस्य वस्तुत्वादिति विरोधाभावात् । इति नायं प्रकरणसमोऽपि ।

न च कालात्ययोपदिष्टः प्रत्यक्षानुमानागमैर्बाधितविषयस्य तथाभावात् । अस्य च तैरविरोधात् । तत्र प्रत्यक्षविरुद्धः, अनुष्णस्तेजोऽवयवी कृतकत्वात् । अनुमानवि[22a. 1]रुद्धः, सावयवाः परमाणवो मूर्तत्वात् । आगमविरुद्धः, शुचि न[र]-शिरःकपालं प्राण्यङ्गत्वादिति । तत्र न तावदयं प्रत्यक्षविरुद्धः, साध्यविपर्ययस्य प्रत्यक्षाविषयत्वात् । नाप्यनुमानविरुद्धो धर्मिग्राहिणानुमानेना बाधितविषयत्वात् ।

---

1. Marginal addition व्यापारा for or after परत्वा ।

न चागमविरुद्धः, आगमेन साध्यविपर्य[य]स्यापरिच्छेदात् । सौगताद्यागमैर्विपरीतपरिच्छेदादिति चेत् । न, तेषां क्षणिकत्वाद्यर्थविस[2]म्वादोपलम्भेन प्रामाण्याभावात् । वेदागमोऽपि बाधकत्वेन नाशङ्कनीयः ।

सहस्रशीर्षा पुरुष
[ऋ. वे. X. 90. 1]

इत्यादिना तत्र कर्तुरेव प्रतिपादनात् । तथाभूतपुरुषातिशयपूर्वकत्वाभावे सत्यप्रामाण्याच्चेति नायमतिक्रान्तकालो हेतुः । तदेवमपनीतहेत्वाभासविभ्रमाद्बलतः साधनादुपादानाद्यभिज्ञो बुद्धिमानभिमतः कर्ता सिध्यति । स [3]एव भगवानस्माकमीश्वर इति स्थितम् ॥

तथास्य सिद्धये शङ्करः साधनमित[र]मभिप्रैति ।

जगदेतत् प्रबोधाश्रयायत्तप्रसवमभिलाषप्रीतिपरमाणुमूर्त्याधारपरत्वापरत्वानुमेयसामान्यसमवायान्त्यविशेषतदेकार्थसमवेतपरिमाणैकत्वपृथक्त्वगुरुत्वस्नेहापार्थिवरूपरसस्पर्शाप्यद्रव्यत्वामूर्तसंयोगतद्वि[4]तरेतराभावानुत्पत्तिरूपारूपमस्मदादिविनिर्मितेतरैत् ।

अचेतनोपादानत्वात् ।
यद[चेतनोपदानकं तत्] तथा, यथा कलसः ।
तथा चेदम् ।
तस्मादिदमपि तथेति ।

अस्यायमर्थः । जगदिति धर्मी । प्रबोधाश्रयायत्तप्रसवमिति साध्यम् । अभिलाषेत्यादि अनुत्पत्तिरूपारूपपर्यन्तेन धर्मिविशेषणेनाकाशादिनित्यवर्गपरिहारः । अस्मदादि[5]विनिर्मितेतरदित्यनेनापि धर्मिविशेषणेन प्रसिद्धकर्तृकघटादिपरिहारः । अभिलाषश्च प्रीतिश्च परमाणुर्मूर्तिश्च । आसामाधारः । आकाश आत्मा परमाणुः परत्वापरत्वानुमेयौ दिक्कालौ सामान्यादयस्तु यथाप्रसिद्धा ग्रहीतव्याः ।

तथा नरसिंहः प्राह ।

विज्ञानाधाराधीनजन्म[1]जन्मावच्छिन्नात्मोभयवाद्यविवादा[6]स्पदपुरुषपूर्वकव्यतिरेकि भावानुभावि प्रमेयजातम् ।

उत्पत्तिमत्त्वात् ।
यद् यदाख्यातसाधनसम्बन्धि तत्तदुक्तसाध्यधर्माधिकरणम् । यथावासः ।
तथा चेदम् ।
तस्मादिदमपि तथेति ।

अस्यायमर्थः । प्रमेयजातं धर्मि । विज्ञानाधाराधीनजन्मेति साध्यम् । अजन्मावच्छिन्नात्मेति धर्मिविशेषणम् । एतेनाकाशादिनित्यवर्गपरिहारः । उभयवाद्यविवादास्पदपुरुषपूर्वकव्य[22b. 1]तिरेकीत्यनेनापि प्रसिद्धकर्तृकघटादिपरिहारः । भावानुभावीति वस्तु रूपम् । एतेन प्रध्वंसादिपरिहारः । यद् यदाख्यातसाधनसम्बन्धीति व्याप्तिवचनं यद्धर्मिरूपं कथितसाधनयोगीत्यर्थः ॥

त्रिलोचनस्तु व्यतिरेकिणमिमं प्रयोगमाह ।

सर्वं कार्यं प्रबोधवद्धेतुकम् ।

उत्पत्तिधर्मकत्वात् ।

यन्नित्यं दृष्टं प्रबोधवद्धेतुकं तस्याकाशादेरुत्पत्तिर्नास्तीति दृष्टम् ।

उत्पत्तिधर्मक[2]ञ्च पक्षीकृतमस्मदादिविलक्षणनिर्मितेतरत् ।

तस्माद् बोधवद्धेतुकमिति ।

पूर्वपुरुषेश्वरसिद्धौ त्रिलोचन एव प्राह,

विवादास्पदीभूतं द्वित्वजातमुत्पत्तौ कस्यचिदेकैकविषयां बुद्धिमपेक्षते ।

द्वित्वसंख्यात्वात् ।

यद् यद् द्वित्वं तत् तथा । यथा द्वे द्रव्ये ।

तथा चेदं द्व्यणुकगतं द्वित्वम् ।

तस्मात्तथेति ।

यस्य चात्र बुद्धिरपेक्ष्यते स भगवानीश्वरः ॥

[3] तथा च वाचस्पतिः प्रमाणयति ।

विवादाध्यासिताभिमततरुगिरिसागरादयः उपादानाद्यभिज्ञकर्तृकाः ।

कार्यत्वात् ।

यद्यत् कार्यं तत्तदुपादानाद्यभिज्ञकर्तृकम् । यथा प्रासादादि ।

तथा च विवादाध्यासितास्तर्वादयः ।

तस्मात्तथेति ।

एवं स्थित्वा स्थित्वा प्रवृत्तिधर्मकत्वात् । सन्निवेशवत्त्वात् । अर्थक्रियाकारित्वादित्यादयो हेतवः [4] कथितपञ्चावयवक्रमेण बोद्धव्या इति ।

तदेतद् दुर्मतिविस्पन्दितं जगदन्धीकरणं न सतामुपेक्षितुमुचितमिति किञ्चिदुच्यते । इह खलु बुद्धिमत्कर्तृकत्वकार्यत्वयोः साध्यसाधनयोः सर्वोपसंहारवती व्याप्तिरवश्यं ग्रहीतव्या । अन्यथा गम्यगमकभावायोगात् । सा च गृह्यमाणा किं कारणकार्यमात्रयोरिव विपर्ययबा[5]धकप्रमाणबलाद् ग्राह्या । यद्वाऽग्निधूमयोरिव विशिष्टान्वयव्यतिरेकग्रहणप्रवणविशिष्टप्रत्यक्षानुपलम्भाभ्यां बोद्धव्या । उत स्वभावहेतुवत् तत्कार्यत्वयोर्भूयोदर्शनादर्शनाभ्यां प्रत्येतव्या । आहोस्वित् संपक्षासपक्षयोः सकृद्दर्शनादर्शनाभ्यां ज्ञातव्येति चत्वारो विकल्पाः ।

न तावदाद्यः पक्षः । साध्यविपर्यये बुद्धिमदभा[6]वे कार्यत्वलक्षणस्य साधनस्य बाधकप्रमाणाभावात् । ननु बाधकप्रमाणाभावोऽसिद्धः । तथा हीदं कार्यत्वं यथा बुद्धिमता व्याप्तमिष्यते तथा देशकालस्वभावनियतत्वेनापि । कादाचित्ककारणसन्निधिनियतत्वेनापि, सामग्रीकार्यत्वेनापि व्याप्तमुपलभ्यम् । स च देशादिनियमः कादाचित्ककारणसन्निधिः सामग्री च बुद्धिमत्पूर्विका सिद्धा । यदि पुनरचेतना[23a.1]नि चेतनानधिष्ठितानि कार्यं कुर्युः । ततो यत्र क्वचनावस्थितानि जनयेयुरिति न देशकालस्वभावनियतत्वं कार्यमुपलभ्येत ।

हेतुसमवधानमन्तरेण न कार्यं प्रत्येकं कारणैर्जन्यत इति चेत् । समवधानमेव तु कारणानां कुतः । कादाचित्कपरिपाकादृष्टविशेषादिति चेत् । नन्वयमचेतनः कथं यथावत् कारणानि सन्निधापयेत् । नो खलु क्वचिदवस्थितानि [2] दण्डादीनि विना कुम्भकारप्रयत्नमदृष्टविशेषवशादेव परस्परं सन्निधीयन्ते । सन्निहितानि वा कार्याय प्रभवन्तीति बुद्धिमता देशकालस्वभावनियमस्य कादाचित्ककारणसन्निधेः सामग्र्याश्च व्याप्तिसिद्धिः । बुद्धिमदभावे चैषां व्यापकानां निवृत्तौ निवर्तमानं कार्यत्वं बुद्धिमत्पूर्वकत्वेन व्याप्यत इति प्रतिबन्धसिद्धये व्यापका[3]नुपलम्भत्रयमुपन्यस्तम् । तथा च न कार्यं बुद्धिमत्परित्यागात् अहेतुकमेव भवतीति सम्भाव्यम् । देशकालस्वभावनियमाभावप्रसङ्गात् । नापि बुद्धिमतोऽन्यस्मादेव भवतीति शङ्कनीयम् । सकृदप्युत्पादाभावप्रसङ्गात् । न चान्यस्मादस्मादपि भवतीति सम्भाव्यम् । अनियतहेतुत्वेऽहेतुत्वप्रसङ्गात् । तथा बुद्धिमन्तमन्तरेणाचे[4]तनेन करणे सर्वदा क्रियाया अविरामप्रसङ्गश्चेत्यपि विपर्ययबाधकमतिप्रसङ्गचतुष्टयं व्याप्तिप्रसाधकमिति कार्यत्वस्य हेतुपूर्वकत्वमिव बुद्धिमत्पूर्वकत्वमप्यवार्यमिति चेत् ।

अत्रोच्यते । सिध्यत्येवेदं मनोराज्यं यदि देशकालस्वभावनियमस्य कादाचित्ककारणसन्निधेः सामग्र्याश्च बुद्धिमत्पूर्वकत्वेन व्याप्तिः सिध्यति । [5] केवलमेतदेव दुरापम् । बुद्धिमदभावेऽपि हि स्वहेतुबलसमुत्पन्नसन्निधे[:]प्रतिनियतदेशकालशक्तिनाऽऽचेतनेनापि सामग्रीलक्षणकारणविशेषेण क्रियमाणानि देशकालस्वभावनियमकादाचित्ककारणसन्निधिसामग्रीकार्यत्वानि युज्यन्त इति सन्दिग्धसिद्धाव्यापकानुपलब्धयः ।

बुद्धिमदभावे समवधानमेव कुत इति चेत् । तदपि चेतनानधिष्ठितयथोक्ताचेतनसामग्रीविशेषादेव । सोऽपि तादृशादित्यनाद्यचेतनसामग्रीपरम्परातोऽपि देशादिनियमसम्भावनायां नावश्यं बुद्धिमदपेक्षा, घटादेर्देशकालस्वभावनियमः, कादाचित्ककारणसन्निधिश्च । सामग्री च बुद्धिमत्पूर्विका दृष्टा इत्यपरोऽपि देशकालस्वभावनियमादिस्तथैवेति चेत् । यद्येवं घ[2361]टादिकमपि कार्यं बहुशो बुद्धिमत्पूर्वकमुपलब्धमिति सर्वमेव कार्यं तथास्तु । किमनेन व्यापकानु[प]लम्भोपन्यासदुर्व्यसनेन । घटादेर्बहुशो बुद्धिमत्पूर्वकत्वदर्शनेऽपि न सर्वत्र कार्यमात्रस्य तथाभावनिश्चयश्चेत् । देशादिनियमादीनामपीदं समानमिति कथमत्रापि शंकाव्युदासः ।

अस्तु तर्हि प्रत्यक्षमेव सर्वत्र व्याप्तिग्राहकमिति चेत् । न तर्हि विपर्ययबाध[2]कप्रमाणबलाद् व्याप्तिग्रहनिर्वाहः । प्रत्यक्षञ्च तत्राशक्तमिति द्वितीयविकल्पावसरे[1] निवेदयिष्यते । तथा सिद्धे कार्यकारणभावे धूमस्याहेतुकोत्पत्तावन्यस्मा[2]देवोत्पत्तावन्यस्मादप्युत्पत्तौ सम्भाव्यमानायां देशादिनियमाभाव[क्लृप्तहेतु][3]त्वान[न्य]हेतुत्वप्रसङ्गाः सङ्गच्छन्ते । प्रस्तुते तु बुद्धिमत्कार्यत्वयोः कार्यकारणभावो नाद्यापि सि[3]द्धः । साधयितुं वा शक्यः । न चाचेतनस्य कर्तृत्वे क्रियाया अविरामप्रसङ्गः सङ्गतः । नह्यचेतनमित्येव सर्वदा सामर्थ्ययोगि । तस्यापि स्वहेतुपरम्पराप्रतिबद्धसामर्थ्यत्वादित्यचेतनकारणविशेषपरम्परासम्भाव्यमानायां नावश्यं बुद्धिमदाक्षेप इति स्वमतव्यामोहविजृम्भितमात्रमेवेदं न पुनरत्र न्या[4]यावलम्बोऽपि ।

1. विकल्पासवरे Ms. 2. स्यादे Ms. 3. Three syllables added but illegible.

तदेवं व्याप्तिसाधनार्थमुपन्यस्तं व्यापकानुपलम्भत्रयं सन्दिग्धासिद्धमति[1]प्रसङ्गवदुष्टमञ्च बुद्धिमत्कार्यमात्रयोर्व्याप्तिसिद्धावसङ्गतम् । अतः कार्यत्वं साधनं सन्दिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिकम् ।

अत्र वाचस्पतिः प्राह ।

सन्दिग्धविपक्षव्यावृत्तिकत्वं नाम हेतुदोष एव न भवति । तत्कथं निरस्यते । तथा[5]हि य एव विपक्षे दृष्टो हेतुः स एव प्रमेयत्वादिवदभिमतं न साधयेत् । यस्तु महतापि प्रयत्नेन मृग्यमाणो असपक्षे नोपलक्षितः स कथं साध्यं न साधयेत् ।

अवश्यं शङ्कया भाव्यं नियामकमपश्यताम् ।

इति तु दत्तावकाशालौकिकमर्यादातिक्रमेण संशयपिशाची लब्धप्रसरा न क्वचिन्नास्तीति नायं क्वचित्प्रवर्ते[6]त । सर्वस्यैवार्थस्य कथञ्चिच्छङ्कास्पदत्वदर्शनात् । अनर्थशङ्कायाश्च प्रेक्षावतां निवृत्त्यङ्गत्वात् । अन्ततः स्निग्धान्नपानोपयोगेऽपि मरणदर्शनात् । तस्मात् प्रामाणिकलोकयात्रामनुपालयता यथादर्शनं शङ्कनीयम् । नत्वदृष्टमपि । विशेषस्मृत्यपेक्षो हि संशयो नास्मृतेर्भवति । न च स्मृतिरननुभूतचरे भवति[2] ।

तदुक्तं मीमांसावार्तिककृता[24a1]प्रव्युष्ट[?]राहस्त्रिकायां

नाशङ्का निःप्रमाणिकेति ।

तथा तेनैव बृहट्टीकायां

उपेक्षेत हि यो मोहादज्ञातमपि बाधकम् ।
स सर्वव्यवहारेषु संशयात्मा क्षयं व्रजेत् । इति

तदेतत् प्रलापमात्रम् । नहि महतापि प्रयत्नेन विपक्षे मृग्यमाणस्य हेतोरदर्शनमात्रेण व्यतिरेकः सिध्यति । तथा हि विपक्षे हेतुर्नोपलभ्यत इत्यनेन तदुपलम्भकप्रमाणनिवृत्तिरुच्यते। [2] प्रमाणं च प्रमेयस्य कार्यम् । नाकारणं विषय इति न्यायात् । न च कार्यनिवृत्तौ कारणनिवृत्तिरुपलब्धा, निर्धूमस्यापि वह्नेरुपलम्भात् । यदि पुनः प्रमाणसत्तया प्रमेयसत्ता व्याप्ता स्यात्, तदा युक्तमेतत् । केवलमियमेव व्याप्तिरसम्भविनी । सर्वस्य सर्वदर्शित्वप्रसङ्गात् । तन्नादर्शनमात्रेण व्यतिरेकसिद्धिः । यथोक्तम् ।

सर्वादृष्टि[3]श्च सन्दिग्धा स्वादृष्टिर्व्यभिचारिणी ।
विन्ध्याद्रिरन्ध्रदूर्वादेरदृष्टावपि सत्त्वतः ॥ इति

सकलविपक्षस्यार्वाग्दर्शनं प्रत्यदृश्यत्वात् । यच्चोक्तम् । संशयपिशाची लब्धप्रसरा न क्वचिन्नास्तीति न क्वचित् प्रवर्ततेति । तदसङ्गतम् । अर्थसंशयस्यापि प्रेक्षावतां प्रवृत्त्यङ्गत्वात् । प्रवृत्तिरविरोधिन्येव । अनर्थसन्देहः सर्वत्र कर्तुं शीयते । अन्ततः स्निग्धा[4]न्नपानोपयोगेऽपि मरणदर्शनादप्रवृत्तिरिति चेत् । दुर्ज्ञानमेतत् । तथा हि अर्थसन्देहोऽनर्थसन्देहो वेति नायं षष्ठीसमासः । किन्त्वर्थोन्मुखः सन्देहोऽर्थसन्देहः । अनर्थोन्मुखः सन्देहोऽनर्थसन्देह इति शाकपार्थिवादिवन्मध्यपदलोपी समासः । एवं सति

---

1, मति Separate hand. 2. ता. टी. 139,

स्निग्धान्नपानादावर्थसन्देह एव । तज्जातीयस्य स्वपर[5]सन्ताने[1] दृष्टिपुष्ट्याद्यर्थस्य कोटिशः करणदर्शनात् । मरणादेरनर्थस्य क्वचित् कदाचिद्दर्शनात् । एतद्विपरीतोऽनर्थसन्देहो द्रष्टव्यः । तस्मात् प्रमाणाविचार्यसंशयादपि प्रेक्षावतां तत्र तत्र प्रवृत्तिर्दुर्वारैव ।

यदपीदं लपितं यथादर्शनं शङ्कनीयं नादृष्टपूर्वमपि विशेषस्मृत्यपेक्षो हि संशय इत्यादि तदसम्बद्धम् । [6] साधकबाधकप्रमाणाभावादेव पर्युदासवृत्त्या वस्त्वन्तररूपात् सर्वत्र संशयोत्पत्तेः । किञ्च विशेषस्मृत्यपेक्ष एवायं संशयः । तथा हि लक्षणयोगित्वायोगित्वाभ्यामेव तज्जातीयातज्जातीये वक्तव्ये । अन्यथा लक्षणप्रणयनमनर्थकं स्यात् । एवं च सति तादात्म्यतदुत्पत्तिलक्षणप्रतिबन्धवियोगित्वेन साधारणेन धर्मेण प्रमेयत्वधूमत्वकार्य-[24b1]त्वादीनां त्वन्मतेन सजातीयत्वात् प्रमेयत्वव्यभिचारदर्शनमेव शङ्कामुपस्थापयतीति यथादर्शनमेवेदमाशङ्कितम् ।

यश्च कुमारिलस्य साक्षित्वेनोपन्यासः स खलु

दधिभाण्डे बिडालः साक्षीति

न्यायं नातिपततीति किमत्र वक्तव्यम् । तदेवं विपक्षेऽदर्शनमात्रेण हेतोर्व्यतिरेकासिद्धेः सन्दिग्धविपक्षव्यावृत्तिकत्वं नाम हेतुदूषणं दुर्वारमेव । अतएवा[2]स्योपन्यासोऽदोषोद्भावनं नाम निग्रहस्थानमिति यदनेनावेदितं तदपि सावद्यम् । प्रत्युतास्मिन् हेतौ सदूषणे परिहर्तव्ये नायं हेतुदोषोऽतो न परिहर्तव्योऽस्य चोपन्यासोऽदोषोद्भावनं नाम निग्रहस्थानमिति ब्रुवन्नयमेव तपस्वी स्वमतेन निरनुयोज्यानुयोगलक्षणेन निग्रहस्थानेन निगृह्यत इति कृपा[3]मर्हति । तदेवं विपर्ययबाधकप्रमाणाभावादव्याप्तेरसिद्धेः सन्दिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिकः कार्यत्वलक्षणो हेतुः ॥

अथाग्निधूमयोरिव विशिष्टान्वयव्यतिरेकग्रहणप्रवणविशिष्टप्रत्यक्षानुपलम्भाभ्यां व्याप्तिर्निश्चीयत इति द्वितीयः पक्षः । अत्रोच्यते । किं दृश्यशरीरोपाधिना बुद्धिमन्मात्रेण व्याप्तिर्गृह्य[4]ते । आहोस्वित् दृश्यशरीरीरोपाधिविधुरेण दृश्यादृश्यसाधारणेनेति विकल्पौ । यद्याद्यः पक्षः, तदा तथाभूतसाध्यमन्तरेणाप्युत्पद्यमाने विटपादौ कार्यत्वदर्शनात् । प्रमेयत्वादिवत् साधारणानैकान्तिको हेतुः ।

ननु वृक्षादयः पक्षीकृताः । कथं तैर्व्यभिचारः । त्रिविधो हि भावराशिः । सन्दिग्धकर्तृको यथा वृक्षादि[5]ः प्रसिद्धकर्तृको यथा घटादिः । अकर्तृको यथा आकाशादिः । तत्र प्रसिद्धकर्तृके घटादौ प्रत्यक्षानुपलम्भाभ्यां व्याप्तिमादाय सन्देहपदे क्ष्मारुहादौ कार्यत्वमुपसंहृत्य बुद्धिमाननुमीयते । न पुनरसौ व्यभिचारविषयो भवितुमर्हति ।

यदाह, न साध्येनैव व्यभिचार इति, अयुक्तमेतत् । नहि व्यभिचारविषय एव [6]पक्षो भवितुमर्हति ।

सन्दिग्धे हेतुवचनाद् व्यस्तो हेतोरनाश्रयः

[प्र. वा. IV. 91]

इति न्यायात् । व्यभिचारविषयता च दृश्यशरीरोपाधेर्बुद्धिमन्मात्रस्य तृणाद्युत्पत्तौ दृश्यानुपलम्भेन प्रतिक्षिप्तत्वात् । ततश्च क्ष्माधरादिरेव

1. सन्ताने सन्ताने Ms.

सन्दिग्धकर्तृकः पक्षीकर्तुमुचितः क्ष्मारुहादिस्त्वचेतनकर्तृक इति चतुर्थो भावराशिर्मन्तव्यः । अथ व्यभिचारचमत्कारान्निर्विषयभावराशिश्च[25a.1]वस्त्यभावे च विटपादौ प्रत्यक्षाप्रतिक्षिप्तेन दृश्यादृश्यसाधारणेन बुद्धिमन्मात्रेण व्याप्तिरवकल्प्यत इति द्वितीयः सङ्कल्पः । तदा विटपादौ बुद्धिमन्मात्रस्य सम्भाव्यमानत्वात् न साधारणानैकान्तिकतां ब्रूमः । किं तर्हि व्याप्तिग्रहणकाले दृश्यादृश्यसाधारणस्य बुद्धिमन्मात्रस्य साध्यस्यादृश्यतया दृश्यानुपलम्भेन व्यतिरेकासिद्धेर्व्याप्तेरभावात् सन्दिग्धव्या[2]वृत्तिकत्वमाचक्ष्महे । तथा हि । यथा कुम्भकारव्यापारात्पूर्वं कुम्भस्य व्यतिरेकः प्रत्येतव्यस्तथा न साध्याभावकृतो घटव्यतिरेकः प्रत्येतुं शक्यः । यथा हि विटपादिजन्मसमये बुद्धिमन्मात्रस्यादृश्यत्वेन निषेद्धुमशक्यत्वात् सत्तासम्भावना । तथा घटादावपि व्यतिरेकनिश्चयकाले बुद्धिमन्मात्रस्यादृश्यत्वात् सत्ता सम्भा[3]वनायां साध्याभावप्रयुक्तस्य साधनाभावस्यासिद्धत्वेन व्याप्तेरभावात् कथं न सन्दिग्धव्यतिरेको हेतुः ।

यथोक्तम् । न च यथा कार्यं च स्यान्निरुपादानं चेति नाशङ्कनीयम् । तथा कार्यं च भवेदकर्तृकं चेति नाशङ्कनीयमिति, तत्रापि कार्यं च स्यान्निरुपादानं च भवेदिति न वक्तव्यमिति केनैवं प्रतारितोऽसि । यदि ह्यत्र प्रत्य[4]क्षानुपलम्भाभ्यां व्याप्तिर्गृह्यते तदा कथमुपादानपूर्वकं कार्यमात्रं सिध्यति । व्याप्तिग्रहणप्रकारान्तरं च त्वयापि नोपन्यस्तम् । दृश्यादृश्यसाधारणयोरुपादानकार्यमात्रयोर्दृश्यविषयाभ्यां प्रत्यक्षानुपलम्भाभ्यां व्याप्तेरभ्युहितुमशक्यत्वात्[1] । स्वमतव्यालोपप्रसङ्गस्तु प्रमाणचिन्तावसरेऽप्राप्तावकाशः । विप[5]र्ययबाधकप्रमाणबलाद्धाऽत्र व्याप्तिसिद्धिः । तथा हि । यथाङ्कुरादिकं कार्यं नियतदेशकालस्वभावत्वेन व्याप्तं तथा शालित्वादिनापि जातिभेदेन व्याप्तमुपलब्धम् । ततश्चानुपादानपूर्वकत्वाद्विपक्षात्मनः शालित्वादिजातिभेदस्य व्यापकस्य निवृत्तौ निवर्तमानं कार्यत्वमुपादानपूर्वकत्वे विश्राम्यत् तेन व्याप्तं सिध्यति । न [6]चानुपादानेनापि क्रियमाणः शालित्वादिजातिभेदो युज्यते । उपादानं विना कृतावनुपादानादेव केवलादेकजातीयकारणात् तदतज्जातीयकार्योत्पत्तौ कार्यभेदस्याहेतुकत्वप्रसङ्गात् । तदुक्तम् ।

तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः । प्र. वा. II. 25।] इति ।

अन्यथाऽनुपादानादेव क्षित्यादेरङ्कुरादिकमुत्पाद्यतेत्यङ्कुरार्थिनो बीजं नानुसरेयुः। [25b. 1] तस्माद्विपर्ययबाधकप्रमाणबलादेव कार्यत्वस्य हेतुमात्रपूर्वकत्वेनेवोपादानपूर्वकत्वेनापि व्याप्तिसिद्धिरिति न्यायः । न चैवं कार्यमात्रकर्तृत्वमात्रयोरपि व्याप्तिप्रसाधकं विपर्यये बाधकं प्रमाणमस्ति । पूर्वोक्तस्य व्यापकानुपलम्भत्रयस्यातिप्रसङ्गचतुष्टयस्य च प्रागेव प्रत्याख्यातत्वात् । तस्मात्कार्यं च स्यात् न च धीमत्कर्तृपूर्वकमिति शङ्कां कुर्वाणः प्र[2]तिवादी विना चरणमर्दनादिना निषेद्धुमशक्यः ।

ननु यदि दृश्याग्निधूमसामान्ययोरिव दृश्यात्मनोरेव कार्यकारणसामान्ययोः प्रत्यक्षानुपलम्भतो व्याप्तिस्तदा परचित्तानुमानक्षतिः । स्वपरसन्तानसाधारणेन दृश्यादृश्येन[2] चित्तमात्रेण प्रत्यक्षतो दृश्यविषयाद्[3] व्याप्तिग्रहणायोगादित्यपि न वाच्यम् । बाह्यार्थ-

---

1. र...हीतुम...Ms. 2. दृश्या later addition. 3. कस्यस्य in Ms. seems to be deleted.

स्थितौ [3]हि स्वपरसन्तानसाधारणस्य चिन्मात्रस्य स्वरूपेणादृश्यत्वेऽपि दृश्यशरीरेण सहैक-सामग्रीप्रतिबन्धादविनिर्भागवर्तित्वमस्त्येव । ततो यथा घटविषयं प्रत्यक्षं रूपैकदेशग्रवृत्तमप्यव्यभिचारात् समुदायोपस्थापकम् । तथा, देहग्राहकमेव प्रत्यक्षं देहाविनिर्भागवर्ति स्वपर-सन्तानसाधारणं चिन्मात्रं कम्पादे[4]र्व्यापकमधिगच्छति । तदेवं दृश्यात्मनो दृश्याविनि-र्भागवर्तिनो वा पदार्थस्य व्यवहारिकपटुप्रत्यक्षतः सिद्धिर्व्याप्तिग्रहश्च । न तु तथात्वविना-कृतादृश्यसाधारणचिन्मात्रस्येति सन्तानान्तरानुमानमुचितम् । तस्माद् यदि प्रत्यक्षानुपलम्भाभ्यां व्याप्तिग्रहस्तदा दृश्येनैव दृश्यस्येति न्यायः ।

तदयं संक्षेपार्थः ।

कार्यत्वस्य विपक्ष[5]वृत्तिहतये सम्भाव्यतेऽतीन्द्रियः
कर्ता चेद् व्यतिरेकसिद्धिविधुरा व्याप्तिः कथं सिध्यति ।
दृश्योऽथ व्यतिरेकसिद्धिमनसा कर्ता समाश्रीयते
तस्यागेऽपि तदा तृणादिकमिति व्यक्तं विपक्षेक्षणम् ।।

अतो न प्रत्यक्षानुपलम्भाभ्यामपि व्याप्तिसिद्धिः ।।

ननु भूयोदर्शनादर्शनाभ्यां प्रतिबन्धः प्रतीयत इति तृतीय एवास्माकं पक्षः[6] । केवलं सप्रतिबन्धो न तदुत्पत्तिलक्षणो ग्रहीतव्यः । किन्तु स्वाभाविकः । स एव दर्शना-दर्शनाभ्यां प्रतीयते । तथा चैतमेवार्थं वाचस्पतिः प्राह[1] ।

न सपक्षासपक्षयोर्दर्शनादर्शनाभ्यां कार्यत्वस्य गमकत्वमपि तु स्वाभाविकप्रतिबन्ध-बलादिति ब्रूमः । स एव तु सपक्षासपक्षयोर्दर्शनादर्शनाभ्यां वक्ष्यमाणेन क्रमेण प्रतीयत इति तदु[26a.1]पक्षेपोऽपि युक्तः । तेन यस्यासौ स्वाभाविकप्रतिबन्धो नियतः सिद्धः स एव गमको गम्यश्चेतरः सम्बन्धीति युज्यते । तथा हि धूमादीनां वह्न्यादिभिः सह सम्बन्धः स्वाभाविको न तु वह्न्यादीनां धूमादिभिः । ते हि विना धूमादिभिरुपलभ्यन्ते । यदा-त्वार्द्रेन्धनसम्बन्धमनुभवन्ति तदा धूमादिभिः सम्बन्ध्यन्ते । तस्माद् वह्न्यादीनां सार्द्रेन्धना-द्युपाधिकृतः सम्बन्धो[2] न तु स्वाभाविकस्ततो न नियतः । स्वाभाविकस्तु धूमादीनां वह्न्यादिभिः सम्बन्धः । तदुपाधेरनुपलभ्यमानत्वात् । क्वचिद् व्यभिचारस्यादर्शनात् । अनुपलभ्यमानस्यापि कल्पनानुपपत्तेः । न चानुपलभ्यमानो दर्शनानर्हतया साधकबाधक-प्रमाणाभावेन सन्दिह्यमान उपाधिः सम्बन्धस्य स्वाभाविकत्वं प्रतिबध्नातीति यु[3]क्तम् । यथोक्तं प्राक् सेयं संशयपिशाचीत्यादि । तस्मादुपाधिं प्रयत्नेनान्विष्यन्तोऽनुपलभमाना नास्तीत्यवगम्य स्वाभाविकत्वं निश्चिनुमः ।

स्यादेतत् । अन्यस्यान्येन सहाकारणेन चेत् स्वाभाविकः सम्बन्धो भवेत्, सर्वं सर्वेण सम्बध्येत ।, तथा च सर्वं सर्वस्माद् गम्येत । अथान्यं चेदन्यस्य कार्यं कस्मात् सर्वं सर्व[4]स्मान्न भवति । अन्यत् सविशेषात् । ततश्च स एवातिप्रसङ्गः । यदु-च्येत स्वभावा न पर्यनुयोज्याः । तस्मादन्यत्वाविशेषेऽपि किञ्चिदेव कारणं कार्यं च किञ्चिदिति ।

---

1. ता० टी० p. 138 f.

नन्वेवं स्वभावानमुयोरोऽकार्यकारणभूतानामपि स्वभावप्रतिबन्धे तुल्य एव । तस्माद् यत्किञ्चिदेतदपि । किमस्य सम्बन्धस्य व्याप्तिग्राहकं प्रमाणमिति[4] चेत् ।

उच्यते भूयोदर्शनगम्या हि व्याप्तिः सामान्यधर्मयोः[श्लो. वा. III. 12]इति प्रसिद्धमेव । अस्यायमर्थः काशिकाकारेण व्याख्यातः । प्राचीनानेकदर्शनजनितसंस्कारसहाये चरमे[1] चेतसि चकास्ति धूमस्याग्नि[2]नियतस्वभावत्वम् । रत्नतत्त्वमिव परीक्षकस्य[3] । शब्दतत्त्वमिव व्याकरणस्मृतिसंस्कृतस्य । ब्राह्मणत्वमिव मातापि[6]तृसम्बन्धस्मरणसचिवस्ये[4]त्यादि ।

नह्येतत् । सर्वमापाततो न प्रतिभातमिति पुरस्तादपि प्रतिभासमानमन्यथा भवतीति ।

त्रिलोचनेन पुनरयमर्थः कथितः । भूयोदर्शनसहायेन मनसा तज्जातीयानां सम्बन्धो गृहीतो भवति । अतो धूमोऽग्निं न व्यभिचरति । तद्व्यभिचारिण्युपाधिरहितं सम्बन्धमतिक्रामेत् । हेतोर्वि[26b.1]पक्षशङ्कानिवर्तकं प्रमाणमुपलब्धिलक्षणप्राप्तोपाधिविरहनिश्चयहेतुरनुपलम्भाख्यं प्रत्यक्षमेव । ततः सिद्धः स्वाभाविकः सम्बन्धः । तथेहापीति स्वमतं व्यवस्थापितमिति ।

वाचस्पतिनापीदमुक्तम् । अभिजातमणिभेदतत्त्ववद् भूयोदर्शनजनितसंस्कारसहायमिन्द्रियमेव धूमादीनां वह्न्यादिभिः स्वाभाविकसम्बन्धग्राहीति युक्तमिति ।

अत्रोच्यते । [2]भेदे सति तदुत्पत्तेरन्यः स्वाभाविकः सम्बन्धः शब्दास्फालनमात्रमेवेदम् । न खलु निरूप्यमाणः प्राप्यते । तथा हि । स्वाभाविकस्तु धूमादीनां वह्न्यादिभिः सम्बन्धः । तदुपाधेरनुपलभ्यमानत्वात् । क्वचिद् व्यभिचारस्यादर्शनादिति त्वयैवास्य लक्षणमुक्तम् । एतच्चासिद्धम् । यतः, उपाधिशब्देन स्वतोऽर्थान्तरमेवापेक्ष[3]णीयमभिधातव्यम् । न चार्थान्तरं दृश्यतानियतम् । अदृश्यस्यापि देशकालस्वभावविप्रकृष्टस्य सम्भवात् । ततश्च धूमस्यापि हुताशेन सह सम्बन्धे स्यादुपाधिः, न चोपलक्ष्यत इति कथमदर्शनामात्स्येव यतः स्वाभाविकसम्बन्धसिद्धिः । अथ यद्यर्थान्तरमपेक्षणीयं स्यात् । कथं धूम इत्येव पावकसत्तानियम इति[4]चेत् ।

ननु इदमेव चिन्त्यते । तदुत्पत्तेरस्वीकारे सहस्रशो दर्शनेऽपि किं सर्वत्र धूमे सत्यवश्यमग्निः सम्भवी नवेति कदाचिदर्थान्तरमुपाधिमपेक्ष्य धूमोऽपि स्यान्नाग्निरिति किमत्र निष्टङ्ककारणम् .। तदुपाधेरनुपलभ्यमानत्वात् । क्वचिद् व्यभिचारस्यादर्शनादिति तु यदुक्तं तत्रास्युक्तमेव । अदृश्यस्याप्युपाधेः[5]सम्भाव्यमानत्वात् । व्यभिचारस्य च प्रत्ययान्तरवैकल्यमाहृत्यादर्शनेऽपि निषेद्धुमशक्यत्वात् । अतएव तयोर्बाधकाभावेऽपि साधकबाधकप्रमाणाभावात् शङ्का सम्भवत्येव । न पुनस्तवामुना विकलवविक्रोशितमात्रेण

1. चरमे दर्शने चेतसि Kāśikā, p. 16. 2. वह्नि Ibid.
3. परीक्षमाणस्य Ibid. 4. स्मरणसहकृतस्य Ibid.

ऽप्यावर्तते । न चैतावता प्रामाणिकलोकयात्रातिक्रमः । प्रामाणिकैरेव साधकबाधक-प्रमा[6]णाभावे न्यायप्राप्तस्य संशयस्य विहितत्वात् । न च सर्वत्राप्रवृत्तिप्रसङ्गः । प्रमाणादर्थसंशयाच्च प्रवृत्तेरुपपत्तेः । न चानर्थसन्देहः सर्वत्र कर्तुं शक्यते । क्वचिद-र्थोन्मुखताया एव दर्शनात् ।

यच्चान्यत्वविशेषेऽपि किञ्चिदेव कारणं कार्यं च किञ्चिदिति स्वभावो यथा न पर्यनुयोज्यस्तथैव स्वभावाननुयोगोऽकार्यकारणभूता[27a.1]नामपि स्वभावप्रतिबन्धे तुल्य एवेति ग्राम्यजनबन्धीकरणं बन्धीकरणमतिलाघवमाविष्करोति वाचस्पतेः । तथा हि वस्तुत्वाविशेषेऽप्यग्निर्दहति नाकाशमित्यत्र यथा नातिप्रसङ्गः सङ्गतः, प्रमाणसिद्धत्वादस्यार्थस्य । तथा भेदाविशेषेऽपि किञ्चिदेव कस्यचित्कारणं कार्यं च किञ्चिदित्यत्रापि नातिप्रसङ्गावतारः । भेदे सति तदन्वयव्यतिरे[2]कानुविधानलक्षणस्य कार्यकारणभावस्य प्रमाणसिद्धत्वादेव । न चैवं स्वाभाविकसम्बन्धशब्दवाच्योऽर्थः प्रमाणसिद्धः कश्चिदस्ति । तल्लक्षणस्यासिद्धत्वस्योक्तत्वात् । न च प्रतिज्ञासिद्धे वस्तुन्यतिप्रसङ्गो नाभिधातव्यः । सर्वेषां सर्वत्र तद्रूपाभ्युपगममात्रेण विजेतृत्व प्रसङ्गात् । यदाहालङ्कारकारः ।

यत्किञ्चिदात्माभिमतं विधाय निरुत्तरस्तत्र कृतः परेण ।
वस्तुस्वभावैरिति वाच्यमित्थं तथोत्तरं स्याद्विजयी समस्तः ॥

इति ।

किञ्च स्वाभाविकसम्बन्ध इति कोऽर्थः । किं स्वतो भूतः स्वहेतुतो भूतोऽहेतुको वेति त्रयः पक्षाः । न तावदाद्यः पक्षः । स्वात्मनि कारित्रविरोधात् । द्वितीयपक्षे तु तदुत्पत्तिरेव सम्बन्धो मुखान्त[4]रेण स्वीकृत इति न कश्चिद्विवादः । अहेतुकत्वे तु देश-कालस्वभावनियमाभावप्रसङ्गादित्यसङ्गतः स्वाभाविकः सम्बन्धः । एतेन यदुक्तम् ।

'न सपक्षासपक्षयोर्दर्शनादर्शनाभ्यां कार्यत्वस्य गमकत्वमपि तु स्वाभाविकसम्बन्धबला-दिति ब्रूमः । स एव तु सपक्षासपक्षयोर्दर्शनादर्शनाभ्यां वक्ष्यमा[5]णेन क्रमेण प्रतीयत इति । तदिष्टकामतामात्राविष्करणमिति मन्तव्यम् । स्वाभाविकसम्बन्धस्य ह्युपाधि-निरपेक्षनियतत्वं लक्षणमुक्तम् । तस्य चोक्तन्यायेनासिद्धो भूयोदर्शनजनितसंस्कारसहाये चरमे चेतसि मनसि वा तथाभूतं नियतत्वं परिस्फुरतीति सबयेन वक्तुमशक्यत्वात् ।

यच्च शब्दत[6]त्वमिव ब्राह्मणत्वमिवेति दृष्टान्तीकृतं तद्द्वयमप्यस्मान् प्रत्यसिद्ध-मिति दृष्टान्तयितुमनुचितम् । अभिजातमणिभेदकत्वं तु परिस्फुरतीति युक्तम् । तस्य ह्युपदेशपरम्परातो माणिक्यवरेनापि कष्टेनेन्द्रधनुराकारज्योतिरादिकं लक्षणं निश्चितम् । न चैवं स्वाभाविकसम्बन्धलक्षणं त्वया स्वकपोलरचितमपि प्रमाणेन निश्चितम् । येना-[27b.1स्यापि तादृशी व्यवस्था स्यादिति यत्किञ्चिदेतत् ।

किं च भवतु तावदयमनवधारितरूपः स्वाभाविकः सम्बन्धः । तथापि दर्शना-दर्शनाभ्यामस्य ग्रहणमतिदुर्लभम् । तथा हि यदि प्राचीनानेकदर्शनजनितसंस्कारसहायेन

चरमचेतसा धूमस्याग्निनियतत्वं ग्राह्यं तदा सपक्षासपक्षयोः कोटिशः प्रवृत्तदर्शनादर्शन-जनितसंस्कारसहा[2]येन चरमचेतसा पार्थिवत्वस्यापि लोहलेख्यत्वनियतत्वं गृह्यत इति पार्थिवत्वादपि लोहलेख्यत्वसिद्धिरस्तु । अथ पार्थिवत्वस्य लोहलेख्यत्वनियतत्वमेव नास्ति वज्रे व्यभिचारदर्शनात् । तत् कथं प्रत्यक्षेण नियतत्वग्रहः । तर्हि धूमस्य वह्निनियतत्व-मेव नास्ति । व्यभिचाराभावस्य दर्शयितुमशक्यत्वात् । तत्क[3]थं चरमचित्तेन नियम-ग्रह इत्यपि तुल्यम् । व्यभिचारादर्शनादव्यभिचार इति चेत् ।

ननु व्यभिचारादर्शनादव्यभिचार इति कोऽर्थः । किं व्यभिचारादर्शनादव्यभिचारः व्यभिचाराभावाद् वा । प्रथमे पक्षे व्यभिचारो भवतु मा वा व्यभिचारादर्शनादेवाव्यभिचार इति निष्णातं पाण्डित्यम् । अथ द्वितीयः पक्षः । तदा व्य[4]भिचाराभावः कुतो ज्ञातः । अदर्शनादिति चेत् । तत् किमदर्शनमात्रं दृश्यादर्शनं वा । प्रथममशक्तम् । नह्यदर्शनेऽपि व्यभिचारो नास्तीत्यभिधातुं शक्यते । चिरकालनष्टब्राह्मणीव्यभिचारवत् । आहत्यादर्शनेऽप्यतिचिरकालव्यवधानेन व्यभिचारदर्शनात् । द्वितीयं चासम्भवि । क्वचित् कदाचित् केनचिद् व्यभिचार[5]दर्शनसामग्र्यां सत्यां व्यभिचारदर्शनात् । दर्शन-सामग्रीभावेतु प्रत्ययान्तरवैकल्यात् देशकालान्तरवर्तित्वाद् वा व्यभिचारस्य स[र्व]प्रत्युप-लब्धिलक्षणप्राप्तत्वाभावात् । तस्मात् सत्यपि व्यभिचारे तदुपलम्भसामग्र्यभावाद् व्यभि-चारानुपलम्भः । प्रकारान्तरेण वा तदुत्पत्तिलक्षणेनाव्यभिचारे व्यभिचारानु[6]पलम्भ इत्युभयथापि व्यभिचारोपलम्भनिवृत्तिरस्तु । त्वया तु यदव्यभिचारप्रतिपत्तिनिबन्धनं दर्शनादर्शनमुपवर्णितं तत्पार्थिवत्वादौ व्यभिचाराद् धूमेऽपि नाव्यभिचारनिबन्धनमिति धूमोऽपि त्वन्मते नाश्वासभाजनमिति प्रसक्तम् ।

अस्मन्मते तु प्रत्यक्षानुपलम्भाभ्यामेकत्र कार्यकारणभावसिद्धौ न व्यभिचारशङ्का-स[म्]भवः । तदभावे[28a.1] तु

हेतुमत्तां विलङ्घयेदिति

न्यायात् न संशयपिशाचावसरः । तदेवं भूयोदर्शनादर्शनाभ्यामपि न व्याप्तिसिद्धिः ॥

तर्हि सकृत् सपक्षासपक्षयोर्दर्शनादर्शनाभ्यां व्याप्तेर्निश्चय इति चतुर्थ एव पक्षोऽस्तु । तथा हि कार्यत्वस्य बुद्धिमन्मात्रपूर्वकत्वेनान्वयो घटादौ दृष्टः । आकाशादौ बुद्धिमत्कारण-निवृत्तौ कार्यत्वस्य व्यतिरेकः । ततश्च सकृदन्वयव्यतिरेक[2]सिद्धौ व्याप्तेः सिद्धत्वात् कुतोऽनैकान्तिकता ॥

अत्राभिधीयते । यदि बुद्धिमत्कारणकार्यत्वयोरेकत्र प्रतिबन्धः प्रमाणप्रतीतः स्यात्तदा आकाशादौ बुद्धिमन्निवृत्तौ कार्यत्वस्य निवृत्तिरिति युक्तम् । स च प्रतिबन्धः तावत्स्यात्तदुत्पत्तिः स्वाभाविकोऽन्यो वा न सिध्यति साधकप्रमाणाभावादित्यनन्तरमेवावेदितम् । ततश्चाकाशादौ बुद्धि[3]मन्निवृत्तिरपि स्यात् । न च कार्यत्वस्य निवृत्तिरिति सन्दिग्ध-विपक्षव्यावृत्तिकत्वादनैकान्तिकं कार्यत्वम् ।

न्याकाशस्यास्मन्मते नित्यत्वं त्वन्मते चासत्त्वम् । तत्कथमतः कार्यत्वव्यतिरेकः सन्दिग्ध इति चेत् । उच्यते । नह्याकाशे कार्यव्यावृत्तिमात्रं व्यतिरेकः । किन्तु साध्याभावप्रयुक्तः साधनाभावो व्यतिरेकः । स चाकाशे ग्रहीतुमशक्यः । [4] यथा तत्र बुद्धिमत्कारणनिवृत्तिस्तथा कारणमात्रस्यापि निवृत्तिः[1] । उक्तस्याभावप्रयुक्तः कार्याभावः प्रतीयतां येन व्यतिरेकः सिध्यति ।

ननु सत्यमेवैतत् । यथाकाशे बुद्धिमत्कारणनिवृत्तिस्तथा कारणमात्रस्यापि तत्र निवृत्तिर्न बुद्धिमत्कारणव्यतिरेकानुविधायित्वं कार्यत्वस्य निश्चेतुं शक्यते । तथापि घटादौ [5]कार्यत्वस्य बुद्धिमतान्वयदर्शनादाकाशेऽपि बुद्धिमद्भावप्रयुक्तः कार्यत्वाभावः प्रतीयते । तत्कथं व्यतिरेकासिद्धिरिति चेत् । हन्त घटादावपि न कार्यत्वस्य सत्तामात्रमन्वयः । किन्तु साध्यसद्भावप्रयुक्तः साधनसद्भावः । स च घटे ग्रहीतुमशक्यः । यथा हि तत्र बुद्धिमद्भावस्तथा कटकुड्यादिभावोऽपि । तत् क एवं जानातु किं बुद्धिमद्भावे[6]कार्यत्वस्य भावो यद्वा कटकुड्यादिभावे भाव इति । तस्मादत्र विशिष्टान्वयव्यतिरेकग्रहणप्रवणविशिष्टप्रत्यक्षानुपलम्भावनुसर्तव्यौ यद् दृश्ययोरेव कार्यकारणयोस्तदुत्पत्तिसिद्धावन्वयव्यतिरेकौ सिध्यतः ।

न च प्रतिबन्धसाधकं प्रमाणं स्वप्नेऽप्यस्तीति चतुर्थोऽपि पक्षः क्षतः । तदेवं बुद्धिमत्कार्यमात्रयोर्व्याप्तेरसिद्धावधिकरणसिद्धान्त[2]न्यायाद्युपादानाद्यभिज्ञः सर्वज्ञः [21b.1] पुरुषविशेषः सिध्यतीति प्रत्याशा दुराशैव ।

यच्च क्रियासामान्यस्य पक्षधर्मतावशाच्चक्षुर्लक्षणकरणविशेषसिद्धिरिति दृष्टान्तो दर्शितः सोऽपि साध्या[भि]न्यः । तत्र हि रूपज्ञानान्यथानुपपत्त्या सिद्धस्य कारणान्तरस्यैव चक्षुरिन्द्रियमिति नामकरणात् । रूपज्ञानजनकत्वातिरिक्तस्य चक्षुर्लक्षणविशेषस्यासिद्धत्वात् । अथ रूपज्ञानजनकत्वमेव चक्षुष्ट्वमुच्यते । भवतु[2]को दोषः । एतदेवास्माभिः करणान्तरमुच्यते । तथैव यदि त्वयापि बुद्धिमत्सामान्याश्रयमात्रस्य पुरुषविशेष इति नाम क्रियते, तदा नास्माकं काचिद्विप्रतिपत्तिः । परमार्थतो बुद्धिमत्सामान्याश्रये सर्वज्ञत्वादिविशेषश्चक्षुरादिविशेषवत् सिध्यतीति तत्र विवदामहे । उभयोरपि दृष्टान्तदार्ष्टान्तिकयोर्विशेषसाधनसा[3]मर्थ्याभावात् ।

तदयं संक्षेपार्थः ।

दृश्ये तु साध्ये व्यभिचार एव दृश्यं न चेन्न व्यभिचारसिद्धिः ।
साधारणत्वादथवा विपक्षसन्देहतः साध्यमतो न सिद्धम् ॥

इतीश्वरो दत्तजलाञ्जलिः ॥

इदानीं साधनस्वरूपं निरूप्यते । यदेतन्मेरुमन्दरमेदिनीघटपटादिसाधारणं कार्यमात्रं साधनमुपन्यस्तम् । यावदस्य बुद्धिमदन्वयव्य[4]तिरेकानुविधानमेकत्र नावधार्यते

1. कारण चैतनस्यापि कारणनिवृत्तिः Ms.

2. A separate hand adds यस्मिन्न[र्थ] सिध्यति तदनुयायीन्य[र्था]न्तरा[णि] सिध्यन्ति सोऽधिकरणसिद्धान्तः । Cf. न्या. सू. I. i. 30.

तावद् गमकत्वमयुक्तम् । न च तत् स्वप्नेऽपि प्रत्येतुं शक्यम् । तथा हि कुम्भकार-व्यापारे सति मृत्पिण्डाद् घटलक्षणं कार्यमुपलभ्यतां नाम । न तु व्यापारात् पूर्वं[ ]घटवत्कार्यमात्रस्य व्यतिरेकः प्रत्येतुं शक्यः । कुम्भकारव्यतिरेकेऽपि शोषभङ्गादिलक्षणस्य कार्यस्य मृत्पिण्डे दर्शनात् । न च यद्विना[5]भूतं यदुपलभ्यते तत्तस्य कार्यमतिप्रसङ्गात् । तृणादिवन्मृत्पिण्डस्य शोषभङ्गादिकार्यमात्रमपि पक्षीकृतमिति चेत् । क्रियतां बुद्धिमद्व्यतिरेके कार्यमात्रव्यतिरेकस्त्वेकत्रापि[1] प्रतिपाद्यतां येन व्याप्तिसिद्धौ तृणादिरिव शोषभङ्गादेरपि बुद्धिमदनुमानं स्यात् । आकाशादिवैधर्म्यदृष्टान्तस्तु पूर्वं प्रतिहतः बुद्धिमत्पूर्वक[6]त्वस्येव कारणमात्रपूर्वकत्वस्यापि तत्र सम्भवात् किंप्रयुक्तः कार्यत्वाभाव इत्यपरिज्ञानात् ।

एतेन यदुक्तम् । न व्यभिचारोपलम्भात्प्रातिस्विकविशेषपरित्यागेन घटादीनामभूत्वाभवनादन्यरूपं विशेषमुपलक्षयामो यन्निष्ठं पुरुषपूर्वकत्वं व्यवस्थापयाम इति । तदपि प्रतिव्यूढम् । कुम्भकाराद्यभावेऽपि मृत्पिण्डादौ शोषभङ्गादिकार्यदर्शनादभूत्वा [29a.1] भाव लक्षणस्य कार्यमात्रस्य व्यतिरेकासिद्धेर्व्याप्तेरभावात् ।

ननु यदि कार्यत्वमात्रस्य न बुद्धिमता प्रत्यक्षतो व्याप्तिग्रहः व्यतिरेकाभावात् । त्वयापि तर्हि कथं कृतकत्वस्यानित्यत्वेन व्याप्तिरवधार्यत इति चेत् । अनपेक्षालम्बनविपर्ययबाधकप्रमाणबलादिति ब्रूमः । तच्चातद्रूपपरावृत्तस्यैव कृतकत्वस्य विपक्षाद् व्यतिरेकं साधयति । न च त्वया विपर्य[2]यबाधकप्रमाणमभिधातुं शक्यत इति प्रागेव प्रतिपादितम् । सन्दिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिकमिदं कार्यत्वमात्रम् ।

एतेन यदेतत् नैयायिकानामाक्षेपपरिहारविडम्बनम् । इह खलु द्वे कार्यत्वे । कार्यमात्रम् । विशिष्टञ्च । तत्राद्यस्य प्रतिबन्धासिद्धेरनैकान्तिकत्वम् । विशिष्टस्य भूधरादिसम्भवादसिद्धत्वमिति । तदस[3]ङ्गतम् । कार्यत्वमात्रस्यैव प्रतिबन्धोपपादनात् ।

यच्चोक्तं विशिष्टं कार्यत्वमिति । कीदृशं पुनस्तदिति वक्तव्यम् । अथ यत्कार्यं पुरुषान्वयव्यतिरेकानुविधायितया तत्पूर्वकमुपलब्धम् । यद्दृष्टेरक्रियादर्शिनोऽपि कृतबुद्धिरुत्पद्यते तत्कार्यं सकलप्रासादाद्यनुगतं भूधरादिव्यावृत्तं विशिष्टमित्यभिधीयते । तदसुन्दरम् । विकल्पानुपपत्तेः ।

तथा चाह शंकरः । कृतबुद्धिः किं साध्यबुद्धिः किं वा साधनबुद्धिः । साध्यबुद्धिरपि यदि गृहीतव्याप्तिकस्य, सा भवत्येव । अथागृहीतव्याप्तिकस्य । किमन्यत्रापि सा भवन्ती दृष्टा । अथ साधनबुद्धिः । तर्हि स्वोपगमविरोधः । सर्वस्य भावस्य कृतकत्वोपगमादिति ।

वाचस्पतिः पुनरत्राह[2] । इदमत्र निपुणतरं निरू[5]पयतु भवान् किं बुद्धिमदन्वयव्यतिरेकानुविधानं विशेषः । आहोस्वित् तद्दर्शनं यत्पर्वतादिषु नास्तीत्यभिधीयते । यदि

1. तत् added, place not indicated. 2. ता. टी. p. 955.

पूर्वकः कल्पः स बुद्धिमद्धेतुकत्वं तनुभुवनादीनामातिष्ठमानैरभ्युपेयत एव । नहि कारणं कार्यानुविहितभावाभावमन्यो वक्तुमर्हति लोकात् । अथ तद्दर्शनमिति चरमः कल्पः । न तर्हि क्रिया[6]दर्शिनः कृतबुद्धिसम्भवः । य एव हि घटोऽनेन बुद्धिमदन्वयव्यतिरेकानुविधायी दृष्टः । स एव कार्यो न तु विपणिवर्ती । तज्जातीयस्य तदन्वयव्यतिरेकानुविधानदर्शनाददृष्टान्वयव्यतिरेकानुविधानमपि तज्जातीयं तथेति चेत् । हन्तोत्पत्तिमद्घटादिबुद्धिमदन्वयव्यतिरेकानुविधायीति अन्यदपि तनुभुवनादिकं तथा भवन्न दण्डेन परा-श्यम्[1] [29b.1]घटजातीयमुत्पत्तिमद्बुद्धिमत्पूर्वकमिति चेत् । ननु प्रासादादि तद्धेतुकं न भवेत् । अघटजातीयत्वात् । अथ यज्जातीयमन्वयव्यतिरेकानुविधायि दृष्टम्, तज्जातीयमेवादृष्टान्वयव्यतिरेकमपि तद्धेतुकम् । तत् किं कार्यजातीयं प्रासादादि बुद्धिमद्धेतुकं न दृष्टम् । येनोत्पत्तिमत्तनुभुवनादिकथा[2] न स्यात् । न खलु तज्जातीयत्वे कश्चिद्विशेष इति ।

त्रिलोकस्त्वाह भव[2]तु वा कश्चिदनिरूपितरूपो विशेषः । किं पुनरनेन विशेषं प्रतिपादयताऽभिप्रेतम् । किं कार्यत्वसामान्यस्यासिद्धत्वम् । अथ कार्यविशेषस्य । अथ कार्यमात्रस्य बुद्धिमत्कर्तृव्यभिचारः । अथ साध्यदृष्टान्तयोर्वैधर्म्यमात्रम् । किं चातः । यदि तावत् कार्यसामान्यस्यासिद्धत्वम् । तन्नास्ति । विश्वम्भरादिष्वपि कारण-व्यापारजन्यत्वस्यो[3]भयसिद्धत्वात् । अथ कार्यविशेषस्य कुम्भादिवर्तिनः पक्षेऽसिद्धिरभिधीयते । तदा न काचिदत्र क्षतिर्विशेषस्य हेतुत्वेनानुपादानात् । यदि कार्यसामान्यस्य कर्तृव्यभिचारः प्रतिपादयितुमिष्टः । स न शक्यो विपक्षेऽदर्शनात् । तृणादेश्च पक्षीकृतत्वात् । शङ्कामात्रस्य सर्वथाऽनिषिद्धत्वात् । सन्दिग्धव्यतिरेकित्वं नैया[4]यिकानां निरनुयोज्यानुयोगो बौद्धानामदोषोद्भावनं निग्रहस्थानमिति तु प्रतिपादितम् । तथापि बाधकप्रमाणान्यभिहितान्येव । तस्मान्न प्रतिबन्धासिद्धेः सर्वत्र व्यभिचाराशङ्का । अथ साध्यदृष्टान्तयोर्वैधर्म्योद्भावनम् । तन्न तस्य सर्वत्र सुलभत्वात् । यदि साध्यदृष्टान्तयोर्वैधर्म्यमात्रात् साध्यासिद्धिः । निवृत्तेदानीमनुमानवार्तापि निकुञ्जमहानसयोरपि धूमवत्त्वेऽपि कथञ्चिद् वैधर्म्योपपत्तेरिति सकलं यत्किञ्चिदेतदिति ।

तदयमत्र संक्षेपार्थः । यत्तावत् कार्यत्वमात्रं तदेवोक्तेन क्रमेण प्रतिबन्धसिद्धेर्भूधरादिषु दृष्टं पुरुषमनुमापयतीत्यस्माकमभिमतसाध्यसिद्धिरुपपन्नैवेति किमस्माकमधिकचिन्तयेत्यङ्गीकृत्याप्यु[6]क्तं विशिष्टकार्यत्वम् । तदेव तु नास्तीति पुर्नविस्तरेण प्रतिपादितमिति तदपि सर्वमनवधेयमेव । तथा हि कार्यत्वमात्रस्य तावदुक्तेन क्रमेण व्याप्तेरसिद्धत्वादनैकान्तिकत्वमनिवार्यम् । यच्च विशिष्टकार्यत्वं विकल्प्य दूषितं तस्यास्माभिरनभ्युपगतत्वात् तद्दूषणाय प्रबन्धः प्रयासैकफलः । नहि कार्यत्वं द्विविधमभिमतम् । एकं सर्वकार्यानुगतम् । (30a.1) अपरं पर्वतादिव्यावृत्तं घटपटप्रासादाद्यनुयायीति ।

2. पराणुद्यते Ibid p. 955,  1. तथा Ibid,

किंतु कार्यमनेकजातीयकम् । तत्र यदि नाम पटस्य प्रासादादिभिः सह वस्तुत्वसंस्थानविशेषयोगित्वकार्यत्वादिभिर्धर्मैः सजातीयत्वमस्ति तथापि न तान् धर्मान् बुद्धिमत्पूर्वकानधिगच्छति व्यवहारिकं प्रत्यक्षम् । कार्यत्वादीनां बुद्धिमद्व्यतिरेकानुविधानाभावात् । तत्कथं प्रासादपर्वतादिषु कार्यत्वा[2]दिदर्शनाद् बुद्धिमदनुमानमस्तु । किंतु यस्यैव घटजातीयकार्यचक्रस्य व्यतिरेकसिद्धिस्तस्य बुद्धिमद्व्याप्तत्वं प्रत्यक्षतः सिद्धमित्युक्तम् । तेन देशकालान्तरे घटजातीयादेव बुद्धिमदनुमानम् । यदा तु प्रासादजातीयकमपि बुद्धिमद्धेतुकमेकत्र पृथगवधार्यते तदा तज्जातीयादपि बुद्धिमत्सिद्धिः । एवं तज्जातीयसरा[3]वोदञ्चनशकटपटकेयूरप्रभृतेः कार्यवत्वाद् बुद्धिमत्पूर्वकत्वेन पृथक् पृथगवधारिताद् बुद्धिमदनुमानमनवद्यम् ।

अमुमेवार्थमभिसन्धायाचार्यपादैरभिहितम् ।

सिद्धं यादृगधिष्ठातृभावाभावानुवृत्तिमत् ।
सन्निवेशादि तद्युक्तं तस्माद् यदनुमीयते ॥

[प्र. वा. I. 12]

इति । एवं घटपटपर्वतादीनां कार्यत्ववस्तुत्वादिभिर्ध[4]र्मैः सजातीयत्वेऽपि अवान्तरं घटपटपर्वतत्वादिजातिभेदमादाय लोकस्य व्याप्तिग्राहकं प्रत्यक्षं प्रवर्तत इति दर्शयितुं संव्यवहारप्रगल्भपुरुषबुद्ध्यपेक्षया यद्दर्शनादक्रियादर्शिनोऽपि कृतबुद्धिर्भवतीत्युक्तम् । न तु शास्त्रपरवशबुद्धिपुरुषापेक्षया । तथा हि शास्त्रसंस्काररहितस्य व्यवहारप्रगल्भस्य[5]पुरुषस्य देवकुलजातीयकं पुरुषपूर्वकतयावधारितवतो नगराद्वनं प्रविष्टस्य पर्वतदेवकुलयोर्दर्शने तयोर्द्वयोरप्यक्रियादर्शिनोऽपि देवकुले कृतबुद्धिर्भवति न पर्वते । तदनयोर्देवकुलपर्वतयोः कार्यत्वादिना एकजातित्वेऽपि कृतबुद्धिभावाभावो न तयोः पर्वतदेवकुलत्वलक्षणावान्तर[6]जातिभेदमनवस्थाप्य स्थातुं प्रभवतः । जातिभेदे च सिद्धे देवकुलजातीये व्याप्तेर्ग्रहणात् न पर्वतजातीयस्य, न च प्रासादजातीयस्य व्याप्तिसिद्धिरिति । न ततो बुद्धिमदनुमानम् । यदा तु प्रासादस्यापि पृथग् व्याप्तिग्रहः तदा तज्जातीयादपि बुद्धिमदनुमानमस्तु । न क्षितिधरादिजातीयस्य स्वप्नेऽपि व्याप्तिग्रहः । क्रीडापर्वतादेर्नाममात्रा[30b.1]भेदेऽपि पर्वतादिभिरेकान्ततो भिन्नस्वरूपत्वात् । यच्च पृष्टं कथं कृतबुद्धिरित्यादि । तत्र कृतिसाध्यबुद्धिरेवेति ब्रूमः । यच्चात्रोक्तं साध्यबुद्धिरपि यदि गृहीतव्याप्तिकस्य सा भवत्येव । अथागृहीतव्याप्तिकस्य किमन्यत्रापि सा भवन्ती दृष्टेति ।

अत्रोच्यते । गृहीतव्याप्तिकस्यानुमानं भवति, अगृहीतव्याप्तिकस्य न भवतीत्यत्रास्माकं न काचिद्विप्रतिपत्तिः । केवलं गृ[2]हीतव्याप्तिकोऽस्मिन् विषये न सम्भवतीति ब्रूमः । उक्तक्रमेण व्यतिरेकसिद्धेर्व्यवहारिकप्रत्यक्षेण कार्यत्वस्य व्याप्तत्वानिश्चयात् । तस्मादवान्तरजातिभेदप्रसिद्ध्यर्थं व्यवहारिकपुरुषापेक्षयैवास्या बुद्धेर्भावाभावावुक्तौ । जातिभेदे च प्रयोजनं पूर्वमेव प्रतिपादितम् ।

यदप्यत्र निपुणम्मन्येन वाचस्पतिना कथितं [3] तत् किं कार्यजातीयं प्रासादादि बुद्धिमद्धेतुकं न दृष्टं येनोत्पत्तिमत्तनुभुवनादि तथा न स्यात् । न खलु तज्जातीयकत्वे

कश्चिद्विशेष इति । तदसङ्गतम् । तथा हि भवतु प्रासादपर्वतादीनां कार्यत्वादिना सजातीयत्वम् । तत्तु न व्यवहारिकप्रत्यक्षेण बुद्धिमद्व्याप्तं प्रत्येतुं शक्यम् । व्याप्तिग्रहणसमये दृष्टान्ते बुद्धिमदभाव[4]प्रयुक्तस्य कार्यमात्रव्यतिरेकस्य दर्शयितुमशक्यत्वात् ।

तदयं संक्षेपार्थः । कार्यत्वमात्रस्याव्यतिरेकादव्याप्तस्यागमकत्वम् । अवान्तरं तु घटप्रासादादिसाधारणं कार्यत्वमात्रमस्माभिरपि न स्वीकृतमेव । यथा तु घटत्वपटत्वादिप्रातिस्विकानेकजातिपुरस्कारेण प्रसिद्धानुमानव्यवस्था । सा चानवद्यमव[5]स्थापितेति ।

सम्प्रति साध्यात्मा विचार्यते । ननु वादिना साधने समुपन्यस्ते तद्दूषणोपन्यासमपास्य साध्यस्वरूपविकल्पनं नाम नैयायिकमते निरनुयोज्यानुयोगः । सौगतमते स्वदोषोद्भावनं निग्रहस्थानमिति चेत् । तदेतज्जाल्मजल्पितम् । तथा हि साध्यस्वरूपेऽपरिनिष्ठिते तदनुसारिणी पक्षस[6]पक्षविपक्षव्यवस्था कुतः । तदसिद्धौ चासिद्धतादयो दोषाः पक्षधर्मतादयश्च गुणा न व्यवस्थिता इत्युक्तम् । नेदानीं हेतोर्दोषगुणं कथयेति मूकेन प्रतिवादिना स्थातव्यम् । तस्माद्धेतुदोषोपन्यासायैवेयं साध्यनिरुक्तिरित्ययमेव वादी स्वमते निरनुयोज्यानुयोगदूषणेन निग्रहस्थानेन निगृह्यत इति किमत्र निर्बन्धेन ।

यदेतत् कार्य[31a.1]त्वं साधनं किमनेन विश्वस्य बुद्धिमन्मात्रपूर्वकत्वं साध्यते । आहोस्विदेकत्वविभुत्वसर्वज्ञत्वनित्यत्वादिगुणविशिष्टबुद्धिमत्पूर्वकत्वम् । प्रथमपक्षे सिद्धसाधनम् । द्वितीये तु व्याप्तेरभावादनैकान्तिकता ।

ननु सामान्येन व्याप्तौ प्रतीतायामपि पक्षधर्मताबलाद् विशेषसिद्धिः यथाग्नेः पर्वतायोगव्यवच्छेदादिसिद्धिः । अन्यथा सर्वानुमानोच्छेदः । अनुमानद्वेषी[2]ह्येवं जल्पति ।

[1]अनुमाभङ्गपङ्केऽस्मिन् निमग्ना वादिदन्तिनः ।
विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यता ॥

अत्रोच्यते । सिध्यत्येव पक्षधर्मताबलतो विशेषः । न तु सर्वः । येन हि विना [2]पक्षस्य[3]साधनं नोपपद्यते स विशेषः सिध्यतु । यथा वह्नेरेव पर्वतवर्तित्वादिविशेषो न पञ्चवर्णशिखाकलापकमनीयः । न[3]च गिरीणां तरूणां कार्यत्वं कर्तुरेकत्वविभुत्वसर्वज्ञत्वादिकमन्तरेण नोपपद्यते । तदितरेष्वपि दर्शनात् । तस्मात्

पक्षायोगव्यवच्छेदभेदमात्रे न[3] दूषणम् ।
इष्टसिद्ध्यन्वयाभावादतिरिक्ते तु दूषणम् ॥

यद्येव[4] स्वस्वरूपोपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञ एव कर्ता साध्यते । स्वरूपमिह च द्व्यणुकं कार्यम्[5] । उपादानमिह परमाणुजाति च[4]तुष्टयम् । उपकरणं समस्तक्षेत्रज्ञ-

---

1. अनुमानभ° Ms.
2. पक्षाक्ष° Ms.
3. भेदमात्रे भेदेन Ms.
4. स्वरूपो added later.
5. स्वरूप...कार्यं added later.

समवायिधर्माधर्मौ । सम्प्रदानं क्षेत्रज्ञाः । यानयं भगवान् स्वकर्मभिर[भि]प्रैति । प्रयोजनं सुखदुःखोपभोगः क्षेत्रज्ञानाम् । एवम्भूते बुद्धिमति साध्ये कुतः सिद्धसाधनम् । न चाव्याप्तिः । कुलालदृष्टान्तेन उपादानाद्यभिज्ञस्य सम्भवात् ।

तथा च वाचस्पतिः प्रमाणयति ।

विवा[5]दाध्यासितास्तनुगिरिसागरादयः उपादानाद्यभिज्ञकर्तृकाः । कार्यत्वात् ।

यद्यत्कार्यं तत्तदुपादानाद्यभिज्ञकर्तृकम् । यथा प्रासादादि ।

तथा च विवादाध्यासितास्तन्वादयः ।

तस्मात्तथेति ।

एवमतः साधनादुपादानाद्यभिज्ञकर्तृमात्रं प्रसाध्य तस्य सर्वज्ञत्वसाधनाय वाचस्पतिरेव[1] पुनरपीदमाह । भवतु ता[6]वदुपादानाद्यभिज्ञकर्तृमात्रसिद्धिः । पारिशेष्यात् तु व्यतिरेकि । द्वितीयनाम्नोऽनुमानाद्विशेषसिद्धिः । तथा हि ।

तनुभुवनाद्युपादानाद्यभिज्ञः कर्ता नाऽनित्यासर्वविषयबुद्धिमान् ।

तत्कर्तुस्तदुपादानाद्यनभिज्ञत्वप्रसङ्गात् ।

नह्येवम्विधस्तदुपादानाद्यभिज्ञो यथाऽस्मदादिः[2] ।

तदुपादानाद्यभिज्ञश्चायम् ।

त[31b. 1]स्मात्तथेति ॥

नो खलु परमाणुभेदान् क्षेत्रज्ञसमवायिनश्च कर्माशयभेदानपरिमेयानन्यः शक्तो ज्ञातुमृत तादृगीश्वरादिति ।

अत्रोच्यते । यावन्ति द्व्यणुकानि भिन्नदेशकालस्वभावानि कार्याणि सन्ति तेषु सर्वेष्वेव किमेक एव बुद्धिमान् व्याप्रियते । अनेको वा । यद्वा स्वस्वविषयमात्रोपादानादिवेदिनः परस्परव्यापारानभिज्ञा भिन्नदेशकाल[2]स्वभावाः प्रतिद्व्यणुकमन्यान्य एव बुद्धिमन्तो व्याप्रियन्ते इति त्रयः पक्षाः ।

न तावत् प्रथम पक्षः । देशकालस्वभावभिन्नानां सर्वेषां द्व्यणुकानां कर्तुरेकत्वासिद्धेः । यच्चैकत्वसाधनाय कार्यलिङ्गाविशेषादित्याद्यपि साधनमुपन्यस्तं तदसङ्गतम् । धूमलिङ्गाविशेषेऽपि ह्यग्नेरनेकत्ववत् । तत्रापि तच्छङ्कासम्भवात् । [3][3] सदिति लिङ्गाविशेषादिति तु दृष्टान्तोऽस्मान् प्रत्यसिद्ध एव । तस्माद् यथा मया नानात्वसाधनाय प्रसाधनं वक्तव्यं तथा त्वयाप्येकत्वसाधनाय साधनमभिधानीयम् ।

अथ मन्यतेऽनेकत्वसाधनाभावादेकत्वसिद्धिरिति । यद्येवमेकत्वसाधनाभावादनेकत्वमेव किं नावगच्छसि ।

यदप्युक्तम् । एकत्वे तु न प्रमाणा[4]न्तरमन्वेष्टव्यमेकस्य कर्तुरभावे वस्तूनां व्यासहत्वमनंसमित्यादि । तदपि चिन्त्यताम् । बहुभिः करणे युगपत्कार्यानुत्पत्तिरिति किं

1. Cf. ता. टी. p. 956. 2. दादे: Ms.

3. वै. सू. I. ii. 17.

भिन्नदेशकालानां कार्याणामनुत्पत्तिर्विवक्षिता । एकस्यैव वा महावयविनः क्षितिघटादिरूपस्य । तत्र एकस्मिन्नपि कार्ये बहुभिः करणे उत्पत्तिविरोधि[नं] न पश्यामः । बहूनां परस्प[5]रं वैमत्यनियमाभावात् । परस्पराव्याघातपुरुषत्वयोर्हि विषयस्यापि विरोधस्यासम्भवात् । पुरुषत्वं हि अपुरुषत्वेन विरुद्धम् । न तु परस्पराव्याघातेन ।

ये त्वनन्तदेशकालस्वभावभेदभिन्नास्तेषु सुतरामेवानेकव्यापारनिषेधोऽसम्भवीति द्वितीयोपि पक्षो व्युदस्तः । न च कर्तुरेकत्वेन दृष्टा व्याप्तिसिद्धिः । [6] अनेकेनापि स्वतन्त्रेण स्वस्वप्रयोजनार्थिना ग्रामप्रविष्टहरिणादिभिरनेकैककार्यदर्शनात् । तस्यापि पक्षीकरणे एककर्तृपूर्वकाभिमतस्यापि पक्षीकरणे आत्मकर्तृपूर्वकत्वमस्तु । तदेवं न सर्वद्व्यणुकानां कर्तुरेकत्वसिद्धिः । तथा चोक्तम् ।

एककर्तुर्न सिद्धौ तु सर्वज्ञत्वं किमाश्रयम्[1] ।

अतएव द्वितीयोऽपि पक्षः क्षीणः । सर्वेषु द्व्यणुकेष्वेकस्यापि कर्तुरप्रवृत्तौ बहूनां सुतरामप्रवृत्तेः ।

तृतीय[32a.1]स्तु पक्षो यदि भवेत् तदा स्वस्वव्यापारविषयमात्रोपादानाद्यभिज्ञत्वेऽपि नैकः कश्चित् सर्वज्ञः सिध्यति । न च ज्ञानं सत्तामात्रेण कतिपयातीन्द्रियदर्शनवत् । सर्वार्थग्रहणं येन तदभेदात् प्रस्तुतपरमाणुवत् सर्वस्यैवाविशेषेण ग्रहणात् सर्वज्ञता स्यात् । अनुमानतो हि कतिपयातीन्द्रियदर्शने सिद्धेऽपीश्वरस्य तत्कारणयोगित्वं निश्चीयते । न तु ज्ञानसत्तामात्रेण प्रकारान्तरेणेति निश्चय इति कुतः सर्वज्ञता ।

नन्वतीन्द्रियं परमाण्वादिकं जानतो न कथं सार्वज्ञमिति चेत् । तत् किमिदानीमसर्वदर्शित्वेऽप्यतीन्द्रियदर्शनमात्रेण सर्वज्ञताप्रत्याशा । एवमेवेति चेत् । हन्त यदि नाम न्यायविहस्तेन त्वया ईदृशो हस्तसमारचितः सर्वज्ञः परिभावितस्तथाप्यन्येषामपारदूरदे[3]शकालवर्तिनां द्व्यणुकादीनामुपादानादिषु जनुषान्धप्रख्यस्य परमपुरुषार्थावेदिनो वा लोकैः प्रामाणिकैश्च नास्य सार्वज्ञ्यमनुमन्यते ।

अस्माकन्तु नातीन्द्रियदर्शिमात्रे प्रद्वेषः । एवं च कर्तुरेकत्वासिद्धौ व्यतिरेक्यपि हेतुरसमर्थः । विश्वेषामेकस्य कर्तुरसिद्धौ तदुपादानाद्यभिज्ञभावस्य सिद्धत्वात् । यश्च यन्मात्र[4]कारः स तन्मात्रोपादानाद्यभिज्ञो भवन्न सर्वज्ञः । अनेकाश्रयेणापि उपादानाद्यभिज्ञसामान्यस्य चरितार्थत्वात् तदेवमुपादानाद्यभिज्ञपुरुषमात्रसिद्धावपि नैकत्वसर्वज्ञत्वादिविशिष्टपुरुषविशेषसिद्धिः । पुरुषमात्रे च सिद्धसाधनमुक्तम् । बुद्धिमन्मात्रपूर्वकतामिच्छतामुपादानाद्यभिज्ञबुद्धिमत्पूर्वकत्वे सा[5]ध्ये कथं सिद्धसाधनमिति चेत् । न तदपेक्षया सिद्धसाध्यताया जनितत्वात् केवलमसिद्धोद्धारेऽभिमते[2] विशेषे सिद्धेऽपि नैयायिकस्यापि नाभिमतसिद्धिरिति ब्रूमः ।

सौगतस्य तावदनिष्टसिद्धिरिति चेत् । न स्वाभिमतसाध्यसाधनेनैव हि परस्यानिष्टमपि साधनीयम् । अन्यथा मातृशोकस्मरणादिनापि तदनिष्टसिद्धिः स्यादिति ।

1. तथा....किमाश्रयम् marginal addition, separate hand.

2. केवलमस्मिद्धद्वारभि Ms.

अस्य संग्रहः ।

परेष्टसिद्धिर्नपरेष्टबाधकं प्रसाधने वेदनयत्नमात्रयोः ।
अनन्वयोऽभीष्टविशेषसाधने विपक्षसन्देहसहन्तु साधनम् ।।

साध्यचिन्ताधिकारस्तृतीयः ।।

एवमन्येऽपि हेतवो यथायोगमभ्युह्य दूषणीयाः । तदेवं तावदीश्वरस्य सद्व्यवहारो निषिद्धः । असद्व्यवहारार्थन्तु तल्लक्षणविलक्षणक्षणभङ्गसाधकं सत्त्वादिसाधनमेव द्रष्टव्यमिति ।।

[32a.1] इत्यबोधजनकतुं विकल्पव्यापि मोहतिमिरप्रतिरोधि ।
रत्नकीर्तिरचनामलरम्यज्योतिरस्तु चिरमप्रतिरोधि ।।

# अपोहसिद्धिः

[32b1]अपोहशब्दार्थो[1] निरुच्यते । ननु कोऽयमपोहो नाम । किमिद[2]मन्यस्मादपोह्यते । अस्माद् वाऽन्यद[3]पोह्यते । अस्मिन् वान्यदपोह्यत इति व्युत्पत्त्या विजातिव्यावृत्तं बाह्यमेव विवक्षितम् । बुद्ध्याकारो वा । यदि वा अपोहनमपोह इत्यन्यव्यावृत्तिमात्रं इति त्रयः पक्षाः ।

न तावदाद्याविमौ पक्षौ । अपोहनाम्ना विधेरेव विवक्षितत्वात् । अन्तिमोऽप्यसंगतः । प्रतीतिबाधितत्वात् । तथा हि पर्वतोद्देशे वह्निरस्तीति शाब्दी प्रतीतिर्विधिरूपमेवोल्लिखन्ती लक्ष्यते । नानग्निर्न भवतीति निवृत्तिमात्रमामुखयन्ती । यच्च प्रत्यक्षबाधितं न तत्र साधनान्तरावकाश इत्यतिप्रसिद्धम् ।

अथ यद्यपि निवृत्तिमहं प्रत्येमीति न विकल्पः । तथापि निवृत्तपदार्थोल्लेख एव निवृत्त्युल्लेखः । न ह्यनन्तर्भावितविशेषणप्रतीतिर्विशिष्टप्रतीतिः । ततो यथा सामान्यमहं प्रत्येमीति विकल्पाभावेऽपि साधारणाकारपरि[4]स्फुरणाद् विकल्पबुद्धिः सामान्यबुद्धिः परेषां, तथा निवृत्ति[5]प्रत्ययाक्षिप्ता निवृत्तिबुद्धिरपोहप्रतीतिव्यवहारमातनोतीति चेत् ।

ननु साधारणाकारपरिस्फुरणे विधिरूपतया यदि सामान्यबोधव्यवस्था, तत् किमायातमस्फुरदभावाकारे चेतसि[6]निवृत्तिप्रतीतिव्यवस्थायाः । ततो निवृत्तिमहं प्रत्येमीत्येवमाकाराभावेऽपि निवृत्त्याकारस्फुरणं यदि स्यात् को नाम निवृत्तिप्रतीति[7]स्थितिमपलपेत् । अन्यथाऽसति प्रतिभासे तत्प्रतीतिव्यवहृतिरिति गवाकारेऽपि चेतसि तुरगबोध इत्यस्तु ।

अथ विशेषणतया अन्तर्भूता निवृत्तिप्रतीतिरित्युक्तम् । तथापि यद्यगवापोढ इतीदृशाकारो विकल्पस्तदा विशेषणतया तदनुप्रवेशो भवतु किन्तु गौरिति प्रतीतिः । तदा च सतोऽपि निवृत्तिलक्षणस्य विशेषणस्य तत्रानुत्कलनात् कथं तत्प्रतीतिव्यवस्था ।

अथैवं मतिः । यद् विधिरूपं स्फुरितं तस्य परापोहोऽप्यस्तीति तत्प्रतीतिरुच्यते । तदापि[8] सम्बन्धमात्रमपोहस्य । विधिरेव[9] साक्षान्निर्भासी । अपि चैवमध्यक्षस्याप्यपोहविषयत्वमनिवार्यम् । विशेषतो विकल्पादेकव्यावृत्तोल्लेखिनोऽखिलान्यव्यावृत्तमीक्षमाणस्य । तस्माद्विध्याकारावग्रहादध्यक्षवद् विकल्पस्यापि विधिविषयत्वमेव नान्यापोहविषयत्वमिति कथम[33a]पोहः शब्दार्थो घुष्यते ।

1. अपोहः शब्दा S. 2. इद0 omitted T. 3. अन्यद् omitted T.
4. परि omitted T. 5. निवृत्त0 T. 6. निवृत्त T.
7. प्रतीति omitted S. 8, तथापि S. 9. विधे0 T.

अत्राभिधीयते । नास्माभिरपोहशब्देन विधिरेव केवलोऽभिप्रेतः । नाप्यन्यव्यावृत्तिमात्रम् । किन्त्वन्यापोहविशिष्टो विधिः शब्दानामर्थः । ततश्च न प्रत्येकपक्षोपनिपातिदोषावकाशः ।

यत्तु गोः प्रतीतौ न तदात्मापरात्मेति सामर्थ्यादपोहः पश्चान्निश्चीयत इति विधिवादिनां मतम् । अन्यापोहप्रतीतौ वा सामर्थ्यादन्यापोढोऽवधार्यते इति प्रतिषेधवादिनां मतम् । तदसुन्दरम् ।

प्राथमिकस्यापि प्रतिपत्ति[1]क्रमादर्शनात् । न हि विधिं प्रतिपद्य कश्चिदर्थापत्तितः पश्चादपोह[2]मवगच्छति । अपोहं वा प्रतिपद्यान्यापोढम् । तस्माद् गोः प्रतिपत्तिरित्यन्यापोढप्रतिपत्तिरुच्यते । यद्यपि चान्यापोढशब्दानुल्लेख उक्तस्तथापि नाप्रतिपत्ति[3]रेव विशेषणभूतस्यान्यापोहस्य । अगवापोढ एव गोशब्दस्य निवेशितत्वात् । यथा नीलोत्पले निवेशितादिन्दीवरशब्दान्नीलोत्पलप्रतीतौ तत्काल एव नीलिमस्फुरणमनिवार्यं तथा गोशब्दादप्यगवापोढे निवेशिताद्[4] गोप्रतीतौ तुल्यकालमेव विशेषणत्वादगो[5]ऽपोहस्फुरणमनिवार्यम् । यथा प्रत्यक्षस्य प्रसह्य रूपाभावग्रहणमभावविकल्पोत्पादनशक्तिरेव तथा विधिविकल्पानामपि तदनुरूपानुष्ठानदान[6]शक्तिरेवाभावग्रहणमभिधीयते । पर्युदासरूपाभावग्रहणं तु नियतस्वरूपसम्वेदनमुभयोरविशिष्टम् । अन्यथा यदि शब्दादर्थप्रतिपत्तिकाले कश्चिद्‌ न परापोहः कथमन्यपरिहारेण प्रवृत्तिः । ततो गां बधानेति चोदितोऽश्वादीनपि बध्नीयात् ।

यदप्यवोचद् वाचस्पतिः[7] जातिमत्यो व्यक्तयो विकल्पानां शब्दानां च गोचरः । तासां च तद्वतीनां रूपमतज्जातीयपरावृत्तमित्यतस्तदवगतेर्न गां बधानेति चोदितोऽश्वादीन्[8] बध्नाति । तदप्यनेनैव निरस्तम् । यतो जातेरधिकायाः प्रक्षेपेऽपि व्यक्तीनां रूपमतज्जातीयपरावृत्तमेव[9] चेत्, तदा तेनैव रूपेण शब्दविकल्पयोर्विषयीभवन्तीनां कथमतद्व्यावृत्तिपरिहारः ।

अथ न[10]विजातीयव्यावृत्तं व्यक्तिरूपं तथाप्रतीतं वा तदा जातिप्रसाद एव इति कथमर्थतोऽपि तदवगतिरित्युक्तप्रायम् ।

अथ जातिबलादेवान्यतोव्यावृत्तम् । भवतु जातिबलात्[11] स्वहेतुपरम्पराबलाद् वान्यव्यावृत्तम् । उभयथापि व्यावृत्ताप्रतिपत्तौ व्यावृत्तिप्रतिपत्तिरस्त्येव ।

न चागवापोढे गोशब्दसङ्केतविधावन्योन्या[33b]श्रयदोषः । सामान्ये तद्वति वा संकेतेऽपि तद्दोषावकाशात् । न हि सामान्यं नाम सामान्यमात्रमभिप्रेतम् । तुरगेऽपि गोशब्दसंकेतप्रसङ्गात् । किन्तु गोत्वम् । तावता च स एव दोषः । गवादिपरिज्ञाने गोत्वसामान्यापरिज्ञानात् । गोत्वसामान्यापरिज्ञाने गोशब्दवाच्यापरिज्ञानात् ।

1. प्रतीतिक्रमा T. 2. दर्थमव S. 3. प्रतीति ⁰ T.
4. निवेशितत्वाद् T. 5. गोऽ⁰ omitted T. 6. दान omitted T.
7. ना. टी. p. 684. 8. अश्वादीन्न T. 9. व्यावृत्त T.
10. विजातिव्या T. 11. देवा...जातिबलात omitted T.

तस्मादेकपिण्डदर्शनपूर्वको यः सर्वव्यक्तिसाधारण इव बहिरध्यस्तो विकल्पबुद्ध्याकारः तत्रायं गौरिति संकेतकरणे नेतरेतराश्रयदोषः।

अभिमते च गोशब्दप्रवृत्तावगोशब्देन शेषस्याप्यभिधानमुचितम्। न चान्यापोहा[1]न्यापोहयोर्विरोधो विशेष्यविशेषणभाव क्षतिर्वा परस्परव्यवच्छेदाभावात्। सामानाधिकरण्यसद्भावात्। भूतलघटाभाववत्। स्वाभावेन हि विरोधो न पराभावेनेत्याबालप्रसिद्धम्। एष[2] पन्थाः श्रुघ्नमुपतिष्ठत इत्यत्राप्यपोहो गम्यत एव। अप्रकृत-[3]पन्थान्तरापेक्षया एष एव श्रुघ्नप्रत्यनीकानिष्टस्थानापेक्षया श्रुघ्नमेव। अरण्यमार्गवद् विच्छेदाभावादुपतिष्ठत एव। सार्थदूतादिव्यवच्छेदेन पन्था एवेति प्रतिपदं व्यवच्छेदस्य सुलभत्वात्। तस्मादपोहधर्मणो विधिरूपस्य शब्दादवगतिः। पुण्डरीकशब्दादिव श्वेतिमविशिष्टस्य पद्मस्य।

यद्येवं विधिरेव शब्दार्थो वक्तुमुचितः कथमपोहो गीयत इति चेत्। उक्तमत्रापोहशब्देनान्यापोहविशिष्टो विधिरुच्यते। तत्र विधौ प्रतीयमाने विशेषणतया तुल्यकालमन्यापोहप्रतीतिरिति।[4]

न चैवं प्रत्यक्षस्याप्यपोहविषयत्वव्यवस्था कर्तुमुचिता। तस्य शाब्द[5]प्रत्ययस्येव वस्तुविषयत्वे विवादाभावात्। विधिशब्देन च[6] यथाऽध्यवसायमतद्रूपपरावृत्तो बाह्योऽर्थोऽभिमतः। यथाप्रतिभासं बुद्ध्याकारश्च। तत्र बाह्योऽर्थोऽध्यवसायादेव शब्दवाच्यो व्यवस्थाप्यते। न स्वलक्षणपरिस्फूर्त्या। प्रत्यक्षवद्देशकालावस्थानियतप्रव्यक्तस्वलक्षणास्फुरणात्। यच्छास्त्रम्

शब्देनाव्यापृताक्षस्य बुद्धावप्रतिभासनात्।
अर्थस्य दृष्टाविव

इति। इन्द्रियशब्दस्वभावोपायभेदादेकस्यैवार्थस्य[7] प्रतिभासभेद इति चेत्।[8]अत्राप्युक्तम्।

जातो नामाश्रयोन्यान्यः चेतसान्तस्य वस्तुतः।
एकस्यैव कुतो रूपं भिन्नाकारावभासि तत्॥
[प्र. वा. II. 2. 235]

नहि स्पष्टास्पष्टे द्वे रूपे परस्परविरुद्धे एकस्य वस्तुनः स्तः। यत[9] एकेनेन्द्रियबुद्धौ प्रतिभासेतान्येन विकल्पे। तथा [34a] सति वस्तुन एव भेदप्राप्तेः। नहि स्वरूपभेदादपरो वस्तुभेदः। न च प्रतिभासभेदादपरः स्वरूपभेदः। अन्यथा त्रैलोक्यमेकमेव वस्तु स्यात्।

दूरासन्नदेशवर्तिनोः पुरुषयोरेकत्र शाखिनि स्पष्टास्पष्टप्रतिभासभेदेऽपि न शाखिभेद इति चेत्। न ब्रूमः प्रतिभासभेदो भिन्नवस्तुनियतः। किन्त्वेकविषयत्वाभावनियत इति।

1. पोहा T. 2. अयं T. 3. प्रवृत्त T.
4. इति omitted T. 5. शब्द T. 6. च omitted T.
7. अर्थस्य omitted S. 8. तत्रा T. 9. यदेकेने T.

ततो यत्रार्थक्रियाभेदादिसचिवः प्रतिभासभेदस्तत्र वस्तुभेदः, घटवत्[1]। अन्यत्र पुनर्नियमेनैकविषयतां परिहरतीत्येकप्रतिभासो भ्रान्तः ।

एतेन यदाह वाचस्पतिः ।

न च शब्दप्रत्यक्षयोर्वस्तुगोचरत्वे प्रत्ययाभेदः कारणभेदेन पारोक्ष्यापारोक्ष्यभेदोपपत्तेरिति तन्नोपयोगि। परोक्षप्रत्ययस्य वस्तुगोचरत्वासमर्थनात्। परोक्षताश्रयस्तु कारणभेद इन्द्रियगोचरग्रहणविरहेणैव कृतार्थः। तन्न । शाब्दे प्रत्यये स्वलक्षणं परिस्फुरति। किं च स्वलक्षणात्मनि वस्तुनि वाच्ये सर्वात्मना प्रतिपत्तेः[2], विधिनिषेधयोरयोगः। तस्य हि सद्भावेऽस्तीति व्यर्थम् । नास्तीत्यसमर्थम् । असद्भावे तु[3] नास्तीति व्यर्थम्। अस्तीत्यसमर्थम्। अस्ति नास्त्यादिपद प्रयोगः। तस्मात्[4]शाब्दादिप्रतिभासस्य बाह्यार्थभावाभावसाधारण्यं न तद्विषयतां क्षमते ।

यच्च वाचस्पतिना जातिमद्व्यक्तिवाच्यतां स्ववाचैव[5] प्रस्तुत्यानन्तरमेव न च शब्दार्थस्य जातेर्भावाभावसाधारण्यं नोपपद्यते । सा हि स्वरूपतो नित्यापि देशकालविप्रकीर्णानेकव्यक्त्याश्रयतया भावाभावसाधारणीभवन्नस्तिनास्तिसम्बन्ध[6]योग्या। वर्तमानव्यक्तिसम्बन्धिता हि जातेरस्तिता। अतीतानागतव्यक्तिसम्बन्धिता च नास्तितेति सन्दिग्धव्यतिरेकित्वादनैकान्तिकं भावाभावसाधारणम्। अन्यथासिद्धं वेति विकल्पितम्[7]। तदप्रस्तुतम्[8]। तावता तावन्न प्रकृतक्षतिः । जातौ भारं न्यस्यता स्वलक्षणवाच्यत्वस्य स्वयं स्वीकारात्। किञ्च सर्वत्र पदार्थस्य[9]स्वलक्षणस्वरूपेणैवास्तित्वादिकं चिन्त्यते। जातेस्तु वर्तमानादिव्यक्तिसम्बन्धोऽस्तित्वादिकमिति तु बालप्रतारणम् । एवं जातिमद्व्यक्तिवचनेऽपि दोषः। व्यक्तेश्चेत् प्रतीतिसिद्धिः जातिरधिका प्रतीयतां मा वा। न तु व्यक्तिप्रतीतिदोषान्मुक्तिः।

एतेन यदुच्यते कौमारिलैः सभागत्वादेव वस्तुनो न साधारण्यदोषः। वृक्षत्वं ह्यनिर्धारितभावाभावं शब्दादवगम्यते । तयोरन्यतरेण शब्दान्तरावगतेन सम्बध्यत इति। तदप्यसङ्गतम्। [34b] सामान्यस्य नित्यस्य प्रतिपत्तावनिर्धारितभावाभावत्वायोगात्।

यच्चेदम्। न च प्रत्यक्षस्येव शब्दानामर्थप्रत्यायनप्रकारो येन तद्दृष्ट इवास्त्यादिशब्दापेक्षा न स्यात्। विचित्रशक्तित्वात् प्रमाणानामिति । तदप्यैन्द्रियकशाब्दप्रतिभासयोरेकस्वरूपग्राहित्वे भिन्नावभासदूषणेन दूषितम्। विचित्रशक्तित्वं च प्रमाणानां साक्षात्काराध्यवसायाभ्यामपि चरितार्थम्। ततो यदि प्रत्यक्षार्थप्रतिपादनं शाब्देन तद्वदेवावभासः स्यात्। अभवंश्च न तद्विषयत्वापनं क्षमते ।

ननु वृक्षशब्देन वृक्षत्वांशे चोदिते सत्त्वाद्यंशनिश्चयनार्थ[10]मस्त्यादिपदप्रयोग इति चेत् ।

1. घटवत् omitted T. 2. ⁰पत्ते विधे T. 3. तु omitted S.
4. शब्द⁰ S. 5. स्वभावतयैव T. 6. त्रसयादिसम्ब T.
7. विलपित⁰ T. 8. तदप्रस्तुतम् omitted S. 9. स्वलक्षण omitted T.
10. निश्रयार्थम् T.

निरंशत्वेन प्रत्यक्षसमधिगतस्य स्वलक्षणस्य कोऽवकाशः पदान्तरेण। धर्मान्तरविधिनिषेधयोः प्रमाणान्तरेण वा।

प्रत्यक्षेऽपि प्रमाणान्तरापेक्षा दृष्टेति चेत्।

भवतु तस्यानिश्चयात्मकत्वा[1]दनभ्यस्तस्वरूपविषये। विकल्पस्तु स्वयं निश्चयात्मको यत्र ग्राही तत्र किमपरेण। अस्ति च शब्दलिङ्गान्तरापेक्षा। ततो न वस्तुस्वरूपग्रहः।

ननु भिन्ना जात्यादयो धर्माः परस्परं धर्मिणश्चेति जातिलक्षणैकधर्मद्वारेण प्रतीतेऽपि शाखिनि धर्मान्तरवत्तया न प्रतीतिरिति किं न भिन्नाभिधानाधीनो धर्मान्तरस्य नीलचलोच्चैस्तरत्वादेरवबोधः।

तदेतदसङ्गतम्। अखण्डात्मनः स्वलक्षणस्य प्रत्यक्षेऽपि[2] प्रतिभासात्। दृश्यस्य धर्मधर्मि[3]भेदस्य प्रत्यक्षप्रतिक्षिप्तत्वात्। अन्यथा सर्वं सर्वत्र स्यादित्यतिप्रसङ्गः।

काल्पनिकभेदाश्रयस्तु धर्मधर्मि[4]व्यवहार इति प्रसाधितं शास्त्रे।

भवतु वा पारमार्थिकोऽपि[5] धर्मधर्मिभेदः। तथाप्यनयोः समवायादेर्दूषितत्वादुपकारलक्षणैव प्रत्यासत्तिरेषितव्या। एवं च[6] यथेन्द्रियप्रत्यासत्त्या प्रत्यक्षेण धर्मिप्रतिपत्तौ सकलतद्धर्मप्रतिपत्तिस्तथा शब्दलिङ्गाभ्यामपि वाच्यवाचकादिसम्बन्धप्रतिबद्धाभ्यां धर्मिप्रतिपत्तौ निरवशेषतद्धर्मप्रतिपत्तिर्भवेत्। प्रत्यासत्तिमात्रस्याविशेषात्।

यच्च वाचस्पतिः, न चैकोपाधिना सत्त्वेन[7] विशिष्टे तस्मिन् गृहीते उपाध्यन्तरविशिष्टस्तद्ग्रहः[8]। स्वभावो हि द्रव्यस्योपाधिभिर्विशिष्यते। न तूपाधयो वा विशेष्यत्वं वा तस्य स्वभाव इति।

तदपि प्लवत एव। न ह्यभेदादुपाध्यन्तरग्रहणमा[9]सञ्जितम्। भेदं पुरस्कृत्यैवोपकारकग्रहणे उपकार्यग्रहणप्रसञ्जनात्। न चाग्निधूमयोः कार्यकारणभाव इव स्वभावत एव धर्मधर्मिणोः प्र[35a][10]तिनियमकल्पनमुचितम्।

तयोरपि[11] प्रमाणासिद्धत्वात्। प्रमाणसिद्धे च स्वभावोपवर्णनमिति न्यायः॥

यच्चात्र न्यायभूषणेन सूर्यादिग्रहणे तदुपकार्याशेषवस्तुराशिग्रहणप्रसञ्जनमुक्तं, तदभिप्रायानवगाहनफलम्। तथा हि त्वन्मते धर्मधर्मिणोर्भेदः, उपकारलक्षणैव च प्रत्यासत्तिस्तदोपकारकग्रहणे समानदेशस्यैव धर्मरूपस्यैव चोपकार्यस्य ग्रहणमासञ्जितम्। तत्कथं सूर्योपकार्यस्य भिन्नदेशस्य द्रव्यान्तरस्य वा दृष्टव्यभिचारस्य ग्रहणप्रसङ्गः सङ्गतः। तस्मादेकधर्मद्वारेणापि वस्तुस्वरूपप्रतिपत्तौ सर्वात्मप्रतीतेः[12] क्व शब्दान्तरेण विधिनिषेधावकाशः। अस्ति च। तस्मान्न स्वलक्षणस्य शब्दविकल्पलिङ्गप्रतिभासित्वमिति स्थितम्।

---

1. निश्चयात्मत्वा S. 2. अपि omitted S. 3. धर्म T.
4. धर्मिधर्म T. 5. अपि omitted S. 6. च omitted T.
7. सत्वे S. 8. विशिष्टतद्० S. 9. ग्रहणं च मा० S.
10. प्रतिपत्तिनियम T. 11. रचापि T. 12. प्रतिपत्तेः T.

नापि सामान्यं शाब्दप्रत्ययप्रतिभासि । सरितः पारे गावश्चरन्तीति गवादिशब्दात् सास्नाशृङ्गलाङ्गूलादयोऽक्षराकारपरिकरिताः सजातीयभेदापरामर्शनात्[1] सम्पिण्डित[2]-प्रायाः प्रतिभासन्ते । न च तदेव सामान्यम् ।

वर्णाकृत्यक्षराकारशून्यं गोत्वं हि कथ्यते ।[3]

[प्र. वा. II. 147]

तदेव च[4] सास्नाभृङ्गादिमात्रमखिलव्यक्तावत्यन्तविलक्षणमपि स्वलक्षणेनैकीक्रियमाणं सामान्यमित्युच्यते तादृशस्य बाह्यस्याप्राप्तेर्भ्रान्तिरेवासौ केशप्रतिभासवत् । तस्माद् वासना-वशाद् बुद्धेरेव तदात्मना विवर्तोऽयमस्तु । असदेव वा तद्रूपं स्यातु । व्यक्तय एव वा स्व-जातीय भेदतिरस्कारेणान्यथा भासन्तामनुभवव्यवधानात् । स्मृतिप्रमोषो वाऽभिधीयताम् । सर्वथा निर्विषयः खल्वयं सामान्यप्रत्ययः । क्व सामान्यवार्ता ।

यत् पुनः सामान्याभावे सामान्यप्रत्ययस्याकस्मिकत्वमुक्तं तदयुक्तम्[5] । यतः पूर्वपिण्ड[6]दर्शनस्मरणसहकारिणातिरिच्यमानाविशेषप्रत्ययजनिका सामग्री निर्विषयं सामान्यविकल्पमुत्पादयति । तदेवं न शाब्देप्रत्यये[7] जातिः प्रतिभाति । नापि प्रत्यक्षे । न चानुमानतोऽपि सिद्धिः । अदृश्यत्वे प्रतिबद्धलिङ्गादर्शनात् । नापीन्द्रियवदस्याः सिद्धिः ज्ञानकार्यतः कादाचित्कस्यैव निमित्तान्तरस्य सिद्धेः । यदा[8] पिण्डान्तरे अन्तराले वा गोबुद्धेरभावं दर्शयेत् तदा शाबलेयादिसकलगोपिण्डानामेवाभावादभावो गोबुद्धेरुपपद्यमानः कथमर्थान्तरमाक्षिपेत् । अथ[9] गोत्वादेव गोपिण्डः । अन्यथा तुरगोऽपि गोपिण्डः स्यात् । यद्येवं गोपिण्डादेव गोत्वमन्यथा [35b] तुरगत्वमपि गोत्वं स्यात् । तस्मात् कारणपर-म्परात एव गोपिण्डो गोत्वं तु भवतु मा वा । ननु सामान्यप्रत्ययजननसामर्थ्यं यद्येकस्मात् पिण्डादभिन्नं तदा विजातीयव्यावृत्तं पिण्डान्तरमसमर्थम् । अथ भिन्नं, तदा तदेव सामान्यम् । नाम्नि परं विवाद इति चेत् । अभिन्नैव सा शक्तिः प्रतिवस्तु । यथात्वेकः शक्तस्वभावो भावस्तथाऽन्योऽपि भवन् कीदृशं दोषमावहति । यथा भवतां जातिरेकाऽपि समानध्वनिप्रसवहेतुः, अन्यापि स्वरूपेणैव जात्यन्तरनिरपेक्षा, तथास्माकं व्यक्तिरपि जातिनिरपेक्षा स्वरूपेणैव भिन्ना हेतुः ।

यत्तु[10] त्रिलोचनः । अश्वत्वगोत्वादीनां सामान्यविशेषणां स्वाश्रये समवायः[11] सामान्यं[12] सामान्यमित्यभिधानप्रत्यययोर्निमित्तमिति ।

यद्येवं व्यक्तिष्वप्ययमेव तथाभिधानप्रत्ययहेतुरस्तु । किं सामान्यस्वीकारप्रमादेन[13] ।

1. वमर्शात् T.
2. संपिहित T.
3. वक्ष्यते T.
4. च omitted T.
5. तदयुक्तं T, added by a separate hand.
6. पिण्डदण्डदर्शन S.
7. शाब्दप्रत्यये S.
8. यदापि S.
9. अथ omitted S.
10. यच्च T.
11. स्वविषयेषु T.
12. सामान्यं omitted T.
13. वचनेन T.

न च समवायः सम्भवी ।

इहेति बुद्धेः समवायसिद्धि-
रिहेति धीश्च द्वयदर्शनेन[1]
न च क्वचित् तद्विषये त्वपेक्षा
स्वकल्पनामात्रमतोऽभ्युपायः ।

एतेन सेयं[2] प्रत्ययानुवृत्तिरनुवृत्तवस्त्वनुयायिनी कथमत्यन्तभेदिनीषु व्यक्तिषु व्यावृत्त-विषयप्रत्ययभावानुपातिनीषु भवितुमर्हतीत्यूहाप्रवर्तनमस्य प्रत्याख्यातम् । जातिष्वेव परस्परव्यावृत्ततया व्यक्तीयमानास्वनुवृत्तप्रत्ययेन व्यभिचारात् ।

यत् पुनरनेन विपर्यये बाधकमुक्तम्, अभिधानप्रत्ययानुवृत्तिः कुतश्चिन्निवृत्य क्वचिदेव भवन्ती निमित्तवती । न चान्यन्निमित्तमित्यादि । तन्न सम्यक् । अनुवृत्तमन्तरेणाप्यभिधान-प्रत्ययानुवृत्तेरतद्रूपपरावृत्तस्वरूपाविशेषादवश्यं स्वीकारस्य साधितत्वात् । तस्मात् ।

तुल्ये भेदे[3] यया जातिः प्रत्यासत्त्या प्रसर्पति ।
क्वचिन्नान्यत्र सैवास्तु शब्दज्ञाननिबन्धनम् ॥
[प्र. वा. III. 161-2]

यत् पुनरत्र न्यायभूषणोक्तं[4] न ह्येवं भवति। यया प्रत्यासत्त्या दण्डसूत्रादेकं[5] प्रसर्पति क्वचिन्नान्यत्र सैव प्रत्यासत्तिः पुरुषस्फटिकादिषु दण्डिसूत्रित्वादिव्यवहारनिबन्धनमस्तु । किं दण्डसूत्रादिनेति । तदसङ्गतम् । दण्डसूत्रयोर्हि पुरुषस्फटिकप्रत्यासन्नयोः दृष्टयोः[6] दण्डिसूत्रित्व[7]प्रत्ययहेतुत्वं नापलप्यते । सामान्यं तु स्वप्नेऽपि न दृष्टम् । तद् यदीदं परिकल्पनीयं तदा वरं प्रत्यासत्तिरेव सामान्यप्रत्ययहेतुः परिकल्प्यताम् । किं गुर्व्या परिकल्पनयेत्यभिप्रायापरिज्ञानात् ।

अथेदं जातिप्रसाधकमनुमानमभिधीयते । यद्विशिष्टज्ञानं तद्विशेषणग्रहण[36a]नान्त-रीयकम् । यथा दण्डिज्ञानम् । विशिष्टज्ञानं चेदं गौरयमित्यर्थतः कार्यहेतुः । विशेषणानु-भवकार्यं हि दृष्टान्ते विशिष्टबुद्धिः सिद्धेति ।

अत्रानुयोगः । विशिष्टबुद्धेर्भिन्नविशेषणग्रहणनान्तरीयकत्वं वा साध्यं विशेषणमात्रानुभव-नान्तरीयकत्वं वा ।

प्रथमपक्षे पक्षस्य प्रत्यक्षबाधासाधनावधानमनवकाशयति । वस्तुग्राहिणः प्रत्यक्षस्योभय-प्रतिभासाभावात् । विशिष्टबुद्धित्वं च सामान्यहेतु[8]रनैकान्तिकः । भिन्नविशेषणग्रहणमन्तरेणापि दर्शनात् । यथा स्वरूपवान् घटः । गोत्वं सामान्यमिति वा ।

---

1. दर्शने स्यात् S. 2. येयं S. 3. तुल्यभेदे S.
4. भूषणेनोक्तं T. 5. सूत्रादि T. 6. दृष्टत्वाद् T.
7. सूत्रिप्रत्यय S. 8. सामान्यं हेतु$^0$ S.

द्वितीयपक्षे तु सिद्धसाधनम्। स्वरूपवान् घट इत्यादिवत् गोत्वजातिमान् पिण्ड इति परिकल्पितं भेदमुपादाय विशेषणविशेष्यभावस्येष्टत्वादगोव्यावृत्तानुभवभावित्वाद् गौरयमिति व्यवहारस्य। तदेवं न सामान्यसिद्धिः। बाधकं च[1] सामान्यगुणकर्माद्युपाधिचक्रस्य। केवल-व्यक्तिग्राहकं पटुप्रत्यक्षम्। दृश्यानुपलम्भो वा प्रसिद्धः[2]।

तदेवं विधिरेव शब्दार्थः। स च बाह्योऽर्थो बुद्ध्याकारश्च विवक्षितः। तत्र न बुद्ध्या-कारस्य तत्त्वतः सम्वृत्या वा विधिनिषेधौ। स्वसंवेदनप्रत्यक्षगम्यत्वात्। अनध्यवसायाच्च। नापि तत्त्वतो बाह्यस्यापि विधिनिषेधौ, तस्य शाब्दे[3] प्रत्ययेऽप्रतिभासनात्[4]। अतएव सर्वधर्माणां तत्त्वतोऽनभिलाप्यत्वम्[5]। प्रतिभासाध्यवसायाभावात् तस्माद् बाह्यस्यैव साम्वृतौ विधिनिषेधौ। अन्यथा [6]संव्यवहारहानिप्रसङ्गात्। तदेवं

नाकारस्य न बाह्यस्य तत्त्वतो विधिसाधनम्।
बहिरेव हि संवृत्या संवृत्याऽपि तु नाकृतेः।

एतेन यद् धर्मोत्तरः। आरोपितस्य बाह्यत्वस्य विधि[7]निषेधावित्यलौकिकमनागममतार्कि-कीयं कथयति तदप्य[8]पहस्तितम्।

नन्वध्यवसाये यद्यध्यवसेयं वस्तु न स्फुरति तदा तदध्यवसितमिति कोऽर्थः। अप्रति-भासेऽपि प्रवृत्तिविषयीकृतमिति योऽर्थः।

अप्रतिभासाविशेषे विषयान्तरपरिहारेण कथं नियतविषयाप्रवृत्तिरिति चेत्।

उच्यते। यद्यपि विश्वमगृहीतं तथापि विकल्पस्य नियतसामग्रीप्रसूतत्वेन नियताकारतय, नियतशक्तित्वात् नियतैव[9] जलादौ प्रवृत्तिः। धूमस्य परोक्षाग्निज्ञानजननवत्[10]।

नियतविषया हि भावाः प्रमाणपरिनिष्ठितस्वभावा न शक्तिसांकर्य[11]पर्यनुयोगभाजः। तस्मात् तदध्यवसायित्व[36b]माकारविशेषयोगात् तत्प्रवृत्तिजनकत्वम्। न च सादृश्यादारो-पेण प्रवृत्तिं ब्रूमः। येनाकारे बाह्यस्य बाह्ये वा आकारस्यारोपद्वारेण दूषणावकाशः। किं तर्हि [12]स्ववासनाविपाकवशादुपजायमानैव बुद्धिरपश्यन्त्यपि बाह्यं बाह्ये [13]प्रवृत्तिमातनोतीति विप्लुतैव। तदेवमन्योन्याभाव[14]विशिष्टो विजातिव्यावृत्तोऽर्थो विधिः। स एव चापोहशब्दवाच्यः शब्दानामर्थः प्रवृत्तिनिवृत्तिविषयश्चेति स्थितम्।

1. च omitted S. 2. सिद्धः T. 3. शाब्द⁰ T.
4. ⁰भासात् T. 5. लप्यत्व T. 6. स omitted T.
7. बाह्यत्वविधि⁰ T. 8. अपि omitted S. 9. नियत एव T.

10. धूमस्य...वत् omitted in T which adds—यथा वह्नौ धूम घटाद्योरसत्त्वेऽपि धूम एवोत्पद्योते न घटादिः। Another ms. consulted by the editor of S reads असदापत्तिवत्। यद्यपि वह्नौ धूमस्य त्रैलोक्यस्याभावस्तथापि ततो धूमस्यैवोत्पादो नान्यस्य।

11. सांकर्यं T. 12. स्व omitted T. 13. S omits प्र
14. मन्याभाव T.

अत्र प्रयोगः। यद् वाचकं तत्सर्वमध्यवसितातद्रूपपरावृत्तवस्तुमात्रगोचरम्। यथेह कूपे जलमिति वचनम्। वाचकं चेदं गवादिशब्दरूपमिति स्वभावहेतुः। नायमसिद्धः। पूर्वोक्तेन न्यायेन पारमार्थिकवाच्यवाचकभावस्याभावेऽप्यध्यवसायकृतस्यैव[1] सर्वव्यवहारिभिरवश्य[2] स्वीकर्त्तव्यत्वात्। अन्यथा सर्वव्यवहारोच्छेदप्रसङ्गात्। नापि विरुद्धः। सपक्षे भावात्। न चानैकान्तिकः। तथा हि शब्दानामध्यवसितविजातिव्यावृत्तवस्तुमात्रविषयत्वमनिच्छद्भिः परैः परमार्थतो

वाच्यं स्वलक्षणमुपाधिरुपाधियोगः
सोपाधिरस्तु यदि वा कृतिरस्तु बुद्धेः।

गत्यन्तराभावात्। अविषयत्वे च वाचकत्वायोगात्। तत्र

आद्यन्तयोर्न समयः फलशक्तिहाने-
र्मध्येऽप्युपाधिविरहात् त्रितयेन युक्तः॥

तदेवं वाच्यान्तरस्याभावात् विषयवत्स्वलक्षणस्य व्यापकस्य[3] निवृत्तौ विपक्षतो निवर्त्तमानं वाचकत्वमध्यवसितबाह्यविषयत्वेन व्याप्यत इति व्याप्तिसिद्धिः।

महापण्डितरत्नकीर्तिपादविर[चि]तमपोहप्रकरणं
समाप्तम्[4]॥

1. एव omitted S. 2. अवश्यं T. 3. लक्षणव्यापकस्य T.

4. S adds the following:

शब्दैस्तावन्मुख्यमाख्यायतेऽर्थ-
स्तत्रापोहस्तद्गुणत्वेन गम्यः।
अर्थश्चैकोऽध्यासतो भासतोऽन्यः
स्थाप्यो वाच्यस्तत्त्वतो नैव कश्चित्।
अपोहसिद्धिः समाप्ता।
कृतिरियं महापण्डितरत्नकीर्तिपादानाम्।

# क्षणभङ्गसिद्धिः

## अन्वयात्मिका

[37b] नमस्तारायै[1] ॥

आक्षिप्तव्यतिरेका या व्याप्तिरन्वयरूपिणी ।
साधर्म्यवति दृष्टान्ते सत्त्वहेतोरिहोच्यते ॥

यत् सत् तत् क्षणिकम् । यथा घटः। सन्तश्चामी विवादास्पदीभूताः पदार्था इति ।

हेतोः परोक्षार्थप्रतिपादकत्वं हेत्वाभासत्वशङ्कानिराकरणमन्तरेण न शक्यते प्रतिपादयितुम् । हेत्वाभासाश्च असिद्धविरुद्धानैकान्तिकप्रभेदेन[2] त्रिविधाः ।

तत्र न तावदयमसिद्धो हेतुः । यदि नाम दर्शने दर्शने नानाप्रकारं सत्त्वलक्षणमुक्तमास्ते, अर्थक्रियाकारित्वं, सत्तासमवायः, स्वरूपसत्त्वं, उत्पादव्ययध्रौव्ययोगित्वं, प्रमाणविषयत्वं, सदुपलम्भक[3]प्रमाणगोचरत्वं, व्यपदेशविषयत्वमित्यादि, तथापि किमनेनाप्रस्तुतेनेदानीमेव निष्टङ्कितेन । यदेव हि प्रमाणतो निरूप्यमाणं पदार्थानां सत्त्वमुपपन्नं भविष्यति तदेव वयमपि स्वीकरिष्यामः । केवलं यदेतदर्थक्रियाकारित्वं सर्वजनप्रसिद्धमास्ते तत् खल्वत्र सत्त्वशब्देनाभिसन्धाय साधनत्वेनोपात्तम् । तच्च यथायोगं प्रत्यक्षानुमानप्रमाणप्रसिद्धसद्भावेषु भावेषु पक्षीकृतेषु प्रत्यक्षादिना प्रमाणेन प्रतीतमिति न स्वरूपेणाश्रयद्वारेण वाऽसिद्धि[4]सम्भावनापि ॥

नापि विरुद्धता[5], सपक्षीकृते घटे सद्भावात् । ननु कथमस्य सपक्षत्वम् । पक्षवदत्रापि क्षणभङ्गासिद्धेः । न ह्यस्य प्रत्यक्षतः क्षणभङ्गसिद्धिः, तथात्वेनानिश्चयात् । नापि सत्त्वानुमानतः । पुनर्निदर्शनान्तरा[6]पेक्षायामनवस्थान[7]प्रसङ्गात् । न चान्यदनुमानमस्ति । सम्भवे वा तेनैव पक्षेऽपि क्षणभङ्गसिद्धेरलं सत्त्वानुमानेनेति चेत् ।

उच्यते । अनुमानान्तरमेव प्रसङ्गप्रसङ्गविपर्ययात्मकं घटस्य क्षणभङ्गप्रसाधकं प्रमाणान्तर-[8]मस्ति । तथा हि[9] घटो वर्तमानक्षणे तावदेकामर्थक्रियां करोति । अतीतानागतक्षणयोरपि किं तामेवार्थक्रियां कुर्यात्, अन्यां वा । न वा कामपि क्रियामिति त्रयः पक्षाः ।

नात्र प्रथमः पक्षो युक्तः, कृतस्य करणायोगात् ।

1. नमः समन्तभद्राय S, नमः श्रीलोकनाथाय A.
2. प्र omitted S.
3. लम्भप्र० S.
4. ऽसिद्ध- S.
5. विरुद्ध: S.
6. अन्तर omitted T.
7. ०वस्थाप्र S.
8. अन्तर omitted T.
9. हि omitted S.

अथ द्वितीयोऽभ्युपगम्यते[1], तदिदमत्र विचार्यताम् । यदा घटो वर्तमानक्षणभावि कार्यं करोति तदा किमतीतानागतक्षणभाविन्यपि कार्ये शक्तोऽशक्तो वा । यदि शक्तस्तदा वर्तमानक्षणभाविकार्यवदतीतानागतक्षणभाव्यपि कार्यं तदैव[2] कुर्यात् । तत्रापि शक्तत्वात् । शक्तस्य च[3] क्षेपायोगात् । अन्यथा वर्तमानक्षणभाविनोऽपि कार्य[38a]स्याकरणप्रसङ्गात् । पूर्वापरकालयोरपि शक्तत्वेनाविशेषात् । समर्थस्य च सहकार्यपेक्षाया अयोगात् । अथाशक्तः । तदैकत्र कार्ये शक्ताशक्तत्वविरुद्धधर्माध्यासात् क्षणविध्वंसो[4] घटस्य दुर्वारप्रसरः स्यात् ।

नापि तृतीयः पक्षः सङ्गच्छते । शक्तस्वभावानुवृत्तरेव । यदा हि शक्तस्य पदार्थस्य[5] विलम्बोऽप्यसह्यस्तदा दूरोत्सारितमकरणम् । अन्यथा वार्तमानिकस्यापि कार्यस्याकरणं स्यादित्युक्तम् ।

तस्माद् यद् यदा यज्जननव्यवहारपात्रं तत्तदा तत् कुर्यात् । अकुर्वच्च न जननव्यवहारभाजनम् । तदेवमेकत्र कार्ये समर्थेतरस्वभावतया प्रतिक्षणं भेदाद् घटस्य सपक्षत्वमक्षतम् ।

अत्र प्रयोगः ।

यद् यदा यज्जननव्यवहारयोग्यं तत् तदा तज्जनयत्येव । यथा अन्त्या कारणसामग्री स्वकार्यम्[6] ।

अतीतानागतक्षणभाविकार्यजननव्यवहारयोग्यश्चायं घटो वर्तमानक्षणभाविकार्यकरणकाले सकलक्रियातिक्रमकालेऽपीति स्वभावहेतुप्रसङ्गः । अस्य च द्वितीयादिक्षणभाविकार्यकरणव्यवहारगोचरत्वस्य प्रसङ्गसाधनस्य वार्तमानिककार्यकरणकाले सकलक्रियातिक्रमकाले च घटे धर्मिणि पराभ्युपगममात्रतः सिद्धत्वादसिद्धिस्तावदसम्भविनी ।

नापि विरुद्धता । सपक्षेऽन्त्यकारणसामग्र्यां सद्भावसम्भवात् ।

नन्वयं साधारणानैकान्तिको हेतुः । साक्षादजनकेऽपि कुशूलाद्यवस्थितबीजादौ विपक्षे समर्थव्यवहारगोचरत्वस्य साधनस्य दर्शनादिति चेत् । न । द्विविधो हि समर्थव्यवहारः । पारमार्थिक औपचारिकश्च । तत्र यत्पारमार्थिकं जननप्रयुक्तं जननव्यवहारगोचरत्वं तदिह साधनत्वेनोपात्तम् । तस्य च कुशूलाद्यवस्थितबीजादौ कारणकारणत्वादौपचारिकजननव्यवहारविषयभूते सम्भवाभावात् कुतः साधारणानैकान्तिकता ।

न चास्य सन्दिग्धव्यतिरेकिता, विपर्यये बाधकप्रमाणसद्भावात् । तथा हीदं जननव्यवहारगोचरत्वं नियतविषयत्वेन व्याप्तमिति सर्वजनानुभवप्रसिद्धम्[7] । न चेदं निर्निमित्तम् । देशकालस्वभावनियमाभावप्रसङ्गात् । न च जननादन्यन्निमित्तमुपलभ्यते । तदन्वयव्यतिरेकानुविधानदर्शनाद् ।

---

1. तदेव० T, तदेतद० A. 2. तदैव omitted S, B reads तदापि । 3. च omitted S. 4. T omits वि । 5. स्वभावस्य S. 6. स्वकार्यम् omitted T. 7. T omits प्र ।

यदि च जननमन्तरेणापि जननव्यवहारगोचरत्वं स्यात् तदा सर्वस्य सर्वत्र जननव्यवहार इत्यनियमः स्यात्। नि[38b]यतश्चायं प्रतीतः। ततो जननाभावे विपक्षे नियतविषयत्वस्य व्यापकस्य निवृत्तौ निवर्तमानं जननव्यवहारगोचरत्वं जनन एव विश्राम्यतीति व्याप्तिसिद्धेरनवद्यो हेतुः। न चैष घटो वर्तमानकार्यकरणक्षणे सकलक्रियातिक्रमणे चातीतानागतक्षणभावि कार्यं जनयति। ततो न जननव्यवहारयोग्यः, सर्वः प्रसङ्गः प्रसङ्गविपर्ययनिष्ठ इति न्यायात्।

अत्रापि प्रयोगः।

यद् यदा यन्नकरोति [न] तत्तदा तत्र समर्थव्यवहारयोग्यम्। यथा शाल्यङ्कुरमकुर्वन् कोद्रवः शाल्यङ्कुरे। न करोति चैष घटो वर्तमानक्षणभाविकार्यकरणकाले[1] सकलक्रियातिक्रमकाले[2] चातीनागतक्षणभावि कार्यम्। इति व्यापकानुपलब्धिर्भिनत्ति समर्थक्षणादसमर्थक्षणम्।

अत्राप्यसिद्धिर्नास्ति। वर्तमानक्षणभाविकार्यकरणकाले सकलक्रियातिक्रमकाले चातीतानागत[3]क्षणभाविकार्यकरणस्यायोगात्[4]।

नापि विरोधः। सपक्षे भावात्।

न चानैकन्तिकता। पूर्वोक्तेन न्यायेन समर्थव्यवहारगोचरत्वजनकत्वयोर्विधिभूतयोः सर्वोपसंहारवत्या व्याप्तेः प्रसाधनात्।

यत् पुनरत्रोक्तं, यद् यदा यन्न करोति न तत्तदा तत्र समर्थमित्यत्र कः करोत्यर्थः। किं कारणत्वम्। उत कार्योत्पादानुगुणसहकारिसाकल्यम्। आहोस्वित् कार्याव्यभिचारः। कार्यसम्बन्धो वेति। तत्र कारणत्वमेव करोत्यर्थः। ततः पक्षान्तरभाविनो दोषा अनभ्युपगमप्रतिहताः।

न चात्र पक्षे कारणत्वसामर्थ्ययोः पर्यायत्वेन व्यापकानुपलम्भस्य साध्याविशिष्टमभिधातुमुचितम्। समर्थव्यवहारगोचरत्वाभावस्य साध्यत्वात्। कारणत्वसमर्थव्यवहारगोचरत्वयोश्च वृक्षशिंशपयोरिव व्यावृत्तिभेदोऽस्तीत्यनवसर एवंविधस्य क्षुद्रप्रलापस्य।

तदेवं प्रसङ्ग[5]प्रसङ्गविपर्ययहेतुद्वयबलतो घटे दृष्टान्ते क्षणभङ्गः सिद्धः। तत् कथं सत्त्वानुमानं दृष्टान्ते क्षणभङ्गसाधकम् नास्तीत्युच्यते। न चैवं सत्त्वहेतोर्वैयर्थ्यम्। दृष्टान्तमात्र एव प्रसङ्गप्रसङ्ग[22]विपर्ययाभ्यां क्षणभङ्गप्रसाधनात्।

नन्वाभ्यामेव पक्षेऽपि क्षणभङ्गसिद्धिरस्त्विति चेत्। अस्तु को दोषः। यो हि प्रतिपत्ता प्रतिवस्तु यद् यदा यज्जननव्यवहारयोग्यं तत्तदा तज्जनयति इत्यादिकमुपन्यसितुमलसस्तस्य तत एव क्षणभङ्गसिद्धिः। यस्तु [32a] प्रतिवस्तु तन्न्यायोपन्यासप्रयासभीरुः

1. क्षणे T. 2. क्षणे T. 3. चातीतादि T.
4. °स्यासम्भवात् T. 5. T omits one प्रसङ्ग।

स खल्वेकत्र धर्मिणि यद् यदा यज्जननव्यवहारयोग्यं तत्तदा तज्जनयति [illegible]दित्यायेन [illegible]स्यैवं [illegible]कार्यं [illegible]देकत्र [illegible]तीति । [illegible]प्रसङ्गतो वैयर्थ्यमस्यावसीत । तदेवमेककार्य[1]कारिणो घटस्य द्वितीयादि[illegible][2][illegible]का-कार्यापेक्षया समर्थेतरस्वभावविरुद्धधर्माध्यासाद् भेद एवेति क्षणभङ्गितया[3] सप[illegible]मावहति घटे सत्त्वहेतुरुपलभ्यमानो न विरुद्धः ।

न चायमनैकान्तिकः । अत्रैव साधर्म्यवति दृष्टान्ते सर्वोपसंहारवत्या व्याप्तेः प्रसाधनात् । ननु विपर्यय[4]बाधकप्रमाणबलाद् व्याप्तिसिद्धिः[5] । तस्य चोपन्यासवार्तापि नास्ति । तत्कथं व्याप्तिः प्रसाधितेति चेत् । तदेतत् तरलबुद्धि[6]विलसितम् । तथा हि । उक्तमेतद् वर्तमानक्षणभाविकार्यकरणकालेऽतीतानागतक्षणभाविकार्येऽपि घटस्य शक्तिसम्भवे तदानीमेव तत्करणम्[7] । अकरणे च शक्ताशक्तस्वभावतया प्रतिक्षणं भेद इति क्षणिकत्वेन व्याप्तैव सा अर्थक्रियाशक्तिः । नन्वेवमन्वयमात्रमस्तु । विपक्षात् पुनरेकान्तेन व्यावृत्तिरिति कुतो लभ्यत[8]इति चेत् । व्याप्तिसिद्धेरेव । व्यतिरेकसन्देहे व्याप्तिसिद्धिरेव कथमिति चेत् । न । द्विविधा हि व्याप्तिसिद्धिः । अन्वयरूपा च कर्तृधर्मः साधनधर्मवति धर्मिणि साध्यधर्मस्यावश्यम्भावो यः, व्यतिरेकरूपा च कर्मधर्मः साध्याभावे साधनस्यावश्यमभावो यः । एतयोश्चैकतरप्रतीतिनियमेन द्वितीयप्रतीतिमाक्षिपति । अन्वयरूपया एकस्याः सिद्धेः[9] । तस्माद् यथा विपर्यये बाधकप्रमाणबलात् नियमवति व्यतिरेके सिद्धेऽन्वयनियमः [illegible] पूर्वं स्थितोऽपि पश्चात् परिगलति[10] । ततोऽन्वयप्रसाधनार्थं न[11] पृथक् [illegible]च्यते । तथा प्रसङ्गतद्विपर्ययहेतुद्वयबलतो नियमवत्यन्वये सिद्धे व्यतिरेकविषये पूर्वं स्थितोऽपि सन्देहः पश्चात्[12] परिगलत्येव ।

न च व्यतिरेकप्र[13]साधकमन्यत् प्रमाणं वक्तव्यम् । ततश्च साध्याभावे साधनस्यैकान्तिको व्यतिरेकः । साधने सति साध्यस्यावश्यमन्वयो वेति न कश्चिदर्थभेदः । तदेवं विपर्ययबाधक-प्रमाणमन्तरेणापि प्रसङ्गप्रसङ्ग[14]विपर्ययहेतुद्वयबलादन्वयरूपव्याप्तिसिद्धौ सत्त्वहेतोरनै-कान्तिकस्याभावादतः साधनात्[15] क्षणभङ्गसिद्धिरनवद्येति ।

ननु च साधनमिदमसिद्धम् । नहि कारणबुद्ध्या कार्यं गृह्यते, तस्य भावित्वात् । न च कार्यबुद्ध्या [39b] कारणम् । तस्यातीतत्वात् । न च वर्तमानग्राहिणा[16] ज्ञानेनातीतानागतयोर्ग्रहणमतिप्रसङ्गात् । न च पूर्वापरयोः कालयोरेकः प्रतिसन्धाता अस्ति, क्षणभङ्गभङ्गप्रसङ्गात् । कारणाभावे तु कार्याभावप्रतीतिः स्वसंवेदनवादिनो मनोरथस्याप्यविषयः[17] । ननु[18] च पूर्वोत्तरकालयोः सम्वित्ती, ताभ्यां जनिता, तथा च हेतुफलावसायी विकल्प इति तदयुक्तम्[19] ।

---

1. ०मेकार्थ S.
2. क्षणोत्तरभावि T.
3. भङ्गतया S.
4. विपर्यये S.
5. व्याप्तेः T.
6. मति T.
7. ०वैतत् S.
8. लभ्यमिति S.
9. एकस्याः एव सिद्धः S.
10. T adds एव ।
11. नान्वयप्रसाधनार्थं T.
12. पश्चात् omitted T.
13. प्र omitted S.
14. T omits one प्रसङ्ग
15. साधनात् omitted T.
16. ग्राहिणा omitted T.
17. ०वादिनः स्वप्नेऽपि दुर्लभा T.
18. S omits नु ।
19. S reads इति युक्तम् ।

स हि विकल्पो गृहीतानुसन्धायकोऽतद्रूपसमारोपको वा ।

न प्रथमः पक्षः । एकस्य प्रतिसन्धातुरभावे पूर्वापरग्रहणयोरयोगात् । विकल्पवासनाया एवाभावात् ।

नापि द्वितीयः । मरीचिकायामपि जलविज्ञानस्य[1] प्रामाण्यप्रसङ्गात् । तदेवमन्वयव्यतिरेकयोरप्रतिपत्ते[2]रर्थक्रियालक्षणं सत्त्वं सिद्धमिति ।।

किञ्च प्रकारान्तरादपीदं साधनमसिद्धम् । तथा हि । बीजादीनां सामर्थ्यं बीजाविज्ञानात् तत्कार्या[3]दङ्कुरादेर्वा निश्चेतव्यम् । कार्यत्वं च वस्तुत्वसिद्धौ सिध्यति । वस्तुत्वं च कार्यान्तरात् । कार्यान्तरस्यापि कार्यत्वं वस्तुत्वसिद्धौ । तद्वस्तुत्वं च तदपरकार्यान्तरादित्यनवस्था ।

अथानवस्थाभयात् च[4] पर्यन्ते कार्यान्तरं नापेक्षते तदा तेनैव पूर्वेषामसत्त्वप्रसङ्गान्नैकस्याप्यर्थसामर्थ्यं सिध्यति ।

ननु कार्यत्वसत्त्वयोर्भिन्नव्यावृत्तिकत्वात् सत्तासिद्धावपि कार्यत्वसिद्धौ का क्षतिरिति चेत् ।

तदसङ्गतम् । सत्यपि कार्यत्वसत्त्वयोर्व्यावृत्तिभेदे सत्तासिद्धौ कुतः कार्यत्वसिद्धिः । कार्यत्वं ह्यभूत्वा भावित्वम् । भवनं च सत्ता । सत्ता च सौगतानां सामर्थ्यमेव । ततश्च सामर्थ्यसन्देहे भवतीत्येव वक्तुमशक्यम् । कथमभूत्वाभावित्वं कार्यत्वं सेत्स्यति । अपेक्षितपरव्यापारत्वं कार्यत्वमित्यपि नासतो धर्मः । सत्त्वं च सामर्थ्यम् । तच्च सन्दिग्धमिति कुतः कार्यसिद्धिः । तदसिद्धौ पूर्वस्य सामर्थ्यं न सिध्यतीति सन्दिग्धासिद्धो हेतुः ।

तथा विरुद्धोऽप्ययम् । तथा हि क्षणिकत्वे सति न तावदजातस्यानन्वयनिरुद्धस्य वा कार्यारम्भकत्वं सम्भवति । न च निष्पन्नस्य तावान् क्षणोऽस्ति यमुपादाय कस्मैचित् कार्याय व्यापार्येत् । अतः क्षणिकपक्ष एवार्थक्रियानुपपत्तेर्विरुद्धता । अथवा विकल्पेन यदुपनीयते तत् सर्वमवस्तु । ततश्च वस्त्वात्मके क्षणिकत्वे साध्येऽवस्तूपस्थापयन्ननुमानविकल्पो विरुद्धः ।

यद्वा सर्वस्यैव हेतोः क्षणिकत्वे साध्ये विरुद्धत्वं देशकालान्तराननुगमे साध्यसाधनभा-[40a]वाभावात् । अनुगमे च नानाकालमेकमक्षणिकं क्षणिकत्वेन विरुध्यत इति ।

अनैकान्तिकोऽप्ययम्, सत्त्वस्थैर्ययोर्विरोधाभावादिति ।

अत्रोच्यते । यत्तावदुक्तं सामर्थ्यं न प्रतीयत इति, तत् किं सर्वथैव न प्रतीयते । क्षणभङ्गपक्षे वा ।

प्रथमपक्षे सकलकारकज्ञापकहेतुचक्रोच्छेदान्मुखस्पन्दनमात्रस्याप्यकरणप्रसङ्गः । अन्यथा येनैव वचनेन सामर्थ्यं नास्तीति प्रतिपाद्यते[5] तस्यैव तत्प्रतिपादनसामर्थ्यमव्याहतमायातम् । तस्मात् परमपुरुषार्थसमीहया वस्तुतत्त्वनिरूपणप्रवृत्तस्य शक्तिस्वीकारपूर्विकैव[6] प्रवृत्तिः । तदस्वीकारे तु न कश्चित् क्वचित् प्रवर्तेतेति निरीहं जगज्जायेत[7] ।

---

1. विज्ञानप्रामा S. 2. रेकाप्रति T. 3. तत् Omitted S.
4. च omitted S. 5. T. sums to have प्रतिपादिते 6. पूर्वकैव S.
7. जायते S.

अथ द्वितीयः पक्षः। तत्रास्ति तावत् सामर्थ्यप्रतीतिः। सा च क्षणिकत्वे यदि नोपपद्यते तदा विरुद्धं वक्तुमुचितम्। असिद्धमिति तु[1] न्यायभूषणीयः प्रायो विलापः। न च सत्यपि क्षणिकत्वे सामर्थ्यप्रतीतिव्याघातः। तथा हि कारणग्राहि[2]ज्ञानोपादेयभूतेन कार्यग्राहिणा ज्ञानेन तदर्पितसंस्कारगर्भेण अस्य भावे अस्य भाव इत्यन्वयनिश्चयो जन्यते। तथा कारणापेक्षया भूतलकैवल्यग्राहिज्ञानोपादेयभूतेन कार्यापेक्षया भूतलकैवल्यग्राहिणा ज्ञानेन तदर्पितसंस्कारगर्भेण अस्याभावे अस्याभाव इति व्यतिरेकनिश्चयो जन्यते। यदाहुर्गुरवः,

एकावसायसमनन्तरजातमन्य-
विज्ञानमन्वयविमर्षमुपादधाति।
एवं तदेकविरहानुभवोद्भवान्य-
व्यावृत्ति[3]धीः प्रथयति व्यतिरेकबुद्धिम्।

एवं सति गृहीतानुसन्धायक एवायं विकल्पः। उपादानोपादेयभूतक्रमिप्रत्यक्षद्वयगृहीतानुसन्धानात्। यदाहालङ्कारः।

यदि नामैकमध्यक्षं न पूर्वापरवित्तिमत्।
अध्यक्षद्वयसद्भावे प्राक्परावेदनं कथम्॥इति॥

नापि द्वितीयोऽसिद्धप्रभेदः। सामर्थ्यं हि सत्वमिति सौगतानां स्थितिरेषा। न चैतत्प्रसाधनार्थमस्माकमिदानीमेव प्रारम्भः। किन्तु यत्र प्रमाणप्रतीते बीजादौ वस्तुभूते धर्मिणि प्रमाणप्रतीतं सामर्थ्यं तत्र क्षणभङ्गप्रसाधनाय[4]। ततश्चाङ्कुरादीनां कार्यादर्शनादाहत्य सामर्थ्यसन्देहेऽपि पटुप्रत्यक्षप्रसिद्धमसत्परावृत्तं[5] सन्मात्रत्वमवधार्यमेव। अन्यथाऽङ्कुरादौ सत्तामात्रानभ्युपगमे प्रतिदर्शनं भेदप्रणयनायोगात्। सर्वत्र सद्व्यवहाराभावप्रसङ्गाच्च।[6] तस्मा[40b]च्छास्त्रीयसत्त्वलक्षणसन्देहेऽपि पटुप्रत्यक्षबलावलम्बितवस्तुभावेऽङ्कुरादौ कार्यत्वमुपलभ्यमानं बीजादेः सामर्थ्यमुपस्थापयतीति नासिद्धिदोषावकाशः।

नापि क्षणिकत्वे सामर्थ्यक्षतिः, यतो विरुद्धता स्यात्। क्षणिकत्वनियतप्राग्भाविस्वलक्षणकारणत्वयोर्विरोधाभावात् क्षणमात्रस्थायिनोऽपि[7] सामर्थ्यसम्भवादिति नाद्यमो विरोधः। नापि द्वितीयो विरोधप्रभेदः। अवस्तुनो वस्तुनो वा स्वाकारस्य ग्राह्यत्वेपि अध्यवसेयवस्त्वपेक्षयैव सर्वत्र प्रामाण्यप्रतिपादनाद् वस्तुस्वभावस्यैव क्षणिकत्वस्य[8] सिद्धिरिति क्व विरोधः।

यच्च गृह्यते यच्चाध्यवसीयते ते द्वे अप्यन्यनिवृत्ती न वस्तुनी स्वलक्षणावगाहित्वेऽभिलापसंसर्गानुपपत्तेरिति चेत्, न। अध्यवसायस्वरूपापरिज्ञानात्, अगृहीतेऽपि वस्तुनि मानस्यादिप्रवृत्तिकारकत्वं विकल्पस्याध्यवसायित्वं। अप्रतिभासेऽपि प्रवृत्तिविषयीकृतत्वमध्यवसेयत्वम्। एतच्चाध्यवसेयत्वं स्वलक्षणस्यैव

---

1. तु omitted T. 2. ग्राहि⁰ omitted in S, but supported by T & A.
3. व्यावृत्त⁰ S. 4. प्र omitted T. 5. असत्परावृत्तं omitted S.
6. For अन्यथाऽङ्कुरादौ........प्रसङ्गाच्च S reads अन्यथा न क्वचिदपि वस्तुमात्रस्यापि प्रतिपत्तिः स्यात्। 7. स्थायिन्यपि S. 8. क्षणिकत्वसि S.

पुरुषेति, नान्यस्य । अर्थक्रियार्थित्वादर्थिप्रवृत्तेः । एवं चाध्यवसाये स्वलक्षणस्यास्फुरणमेव । न च तस्यास्फुरणेऽपि सर्वत्राविशेषेण प्रवृत्त्याक्षेपप्रसङ्गः, प्रतिनियतसामग्रीप्रसूतात्, प्रतिनियतस्वाकारात् , प्रतिनियतशक्तियोगात्[1], प्रतिनियत एवातद्रूपपरावृत्तेऽप्रतीतेऽपि प्रवृत्तिसामर्थ्यदर्शनात्, यथा सर्वस्यासत्त्वेऽपि बीजादङ्कुरस्यैवोत्पत्तिः, दृष्टस्य नियतहेतुफलभावस्य प्रतिक्षेप्तुमशक्यत्वात् । परं बाह्येनार्थेन सति प्रतिबन्धे प्रामाण्यम् । त्वप्रामाण्यमिति विशेषः ।

तथा तृतीयोऽपि पक्षः प्रयासफलः । नानाकालस्यैकस्य वस्तुनो वस्तुतोऽसम्भवेऽपि सर्वदेशकालवर्तिनोर्[2]तद्रूपपरावृत्तयोरेव साध्यसाधनयोः प्रत्यक्षेण व्याप्तिग्रहणात् । द्विविधो हि प्रत्यक्षस्य विषयः । ग्राह्योऽध्यवसेयश्च । सकलातद्रूपपरावृत्तं वस्तुमात्रं साक्षादस्फुरणात् प्रत्यक्षस्य ग्राह्यो विषयो मा भूत् । तदेकदेशग्रहणे तु तन्मात्रयोर्व्याप्तिनिश्चायकविकल्पजननादध्यवसेयो विषयो भवत्येव । क्षणग्रहणे सन्ताननिश्चयवत् । रूपमात्रग्रहणे रूपरसगन्धस्पर्शात्मक[3]घटनिश्चयवच्च[4] । अन्यथा सर्वानुमानोच्छेदप्रसङ्गात्[5] ।

तथा हि व्याप्तिग्रहः सामान्ययोः, विशेषयोः, सामान्यविशिष्टस्वलक्षणयोः[6] स्वलक्षण[7]-विशिष्टसामान्ययो[41a]र्वेति विकल्पाः ।

नाद्यो विकल्पः । सामान्यस्य बाध्यत्वात् । अबाध्यत्वेऽप्यदृश्यत्वात् । दृश्यत्वेऽपि पुरुषार्थानुपयोगितया तस्यानुमेयत्वायोगात् । नाप्यनुमितात् सामान्याद् विशेषानुमानम् । सामान्यसर्वस्वलक्षणयो[8]र्वक्ष्यमाणन्यायेन प्रतिबन्धप्रतिपत्तेरयोगात् ।

नापि[3] द्वितीयः । विशेषस्याननुगामित्वात् ।

अस्मिंस्तु विकल्पद्वये सामान्याधारतया दृष्ट एव विशेषः सामान्यस्य विशेष्यो विशेषणं वा कर्तव्यः । अदृष्ट एव वा देशकालान्तरवर्ती । यद्वा दृष्टादृष्टात्मको देशकालान्तर्वर्त्यतद्रूपपरावृत्तः सर्वो विशेषः ।

न प्रथमः पक्षोऽननुगामित्वात् । नापि द्वितीयः । अदृष्टत्वात् । न च तृतीयः । प्रस्तुतैकविशेषदर्शनेऽपि देशकालान्तरवर्तिनां विशेषाणामदर्शनात्[9] ।

अथ तेषां सर्वेषामेव विशेषाणां सदृशत्वात् । सदृशसामग्रीप्रसूतत्वात् । सदृशकार्यकारित्वादिति प्रत्यासत्त्या एकविशेषग्राहकं प्रत्यक्षमतद्रूपपरावृत्तमात्रे निश्चयं जनयदतद्रूपपरावृत्तविशेषमात्रस्य व्यवस्थापकम् । यथैकसामग्रीप्रतिबद्धरूपमात्रग्राहकं प्रत्यक्षं घटे निश्चयं जनयद् घटग्राहकं व्यवस्थाप्यते । अन्यथा घटोऽपि घटसन्तानोऽपि प्रत्यक्षतो न सिध्येत् । सर्वात्मना[10] ग्रहणाभावात् । तदेकदेशग्रहणं त्वतद्रूपपरावृत्तेऽप्यविशिष्टम् । यद्येवमनेनैव क्रमेण सर्वस्य विशेषस्य

1. एव स्वलक्षणे T. 2. सर्वदेश.........नोर omitted S.
3. रूप......त्मक omitted S. 4. च omitted T. 5. प्रसङ्गः T.
6. विशिष्टविशेषयोः S. 7. विशेष S. 8. विशेषयो⁰ S.
9. विशेषाणाम omitted S. 10. सर्वस्वलक्षणग्रहणा T.

विशेषणविशेष्यभाववत् व्याप्तिप्रतिपत्तिरप्यस्तु । तत् किमर्थं नानाकालमेकमक्षणिक[1]मभ्युपगन्तव्यं येन क्षणिकत्व[2]साधनस्य विरुद्धत्वं स्यादिति न कश्चिद्विरोधप्रधेवप्रसङ्गः ॥

न चायमनैकान्तिकोऽपि[3] हेतुः । पूर्वोक्तक्रमेणसाधर्म्यदृष्टान्ते प्रसङ्गविपर्यय[4]-हेतुभ्यामन्वयरूपव्याप्तेः प्रसाधनात् । ननु यदि प्रसङ्गविपर्ययहेतुद्वयबलतो घटे दृष्टान्ते क्षणभङ्गः सिध्येत् तदा सत्त्वस्य नियमेन क्षणिकत्वेन व्याप्तिसिद्धेरनैकान्तिकत्वं न स्यादिति युक्तम् । केवलमिदमेवासम्भवि । तथा हि शक्तोऽपि घटः क्रमिकसहकार्यपेक्षया क्रमिकार्यं करिष्यति ।

न चैतद् वक्तव्यम् । समर्थोऽयं स्वरूपेण करोति । स्वरूपं च सर्वदाऽस्तीत्यनुपकारिणी सहकारिण्यपेक्षा न युज्यते इति । सत्यपि स्वरूपेण कारकत्वे सामर्थ्याभावात् कथं करोतु[5] । सहकारिसाकल्यं हि सामर्थ्यम् । तद्वैकल्यं चासामर्थ्यम् । न[41b] च तयोराविर्भावतिरोभावाभ्यां तद्वतः काचित् क्षतिः । तस्य ताभ्यामन्यत्वात् । तस्मादयं समर्थोऽपि स्यात् । न च करोतीति सन्दिग्धव्यतिरेकः प्रसङ्गहेतुः ।

अत्रोच्यते । भवतु तावत् सहकारिसाकल्यमेव सामर्थ्यम् । तथापि सोऽपि तावद् भावः स्वरूपेण कारकः । तस्य च[6] यादृशश्चरमक्षणेऽक्षेपक्रियाधर्मा स्वभाव[7]स्तादृश एव चेत् प्रथमक्षणे तदा तदापि प्रसह्य कुर्वाणो ब्रह्मणाप्यनिवार्यः । न च सोऽप्यक्षेपक्रियाधर्मा स्वभावः साकल्ये सति जातो भावाद् भिन्न एवाभिधातुं शक्यः । भावस्याकर्तृत्वप्रसङ्गात् । एवं यावद् यावद् धर्मान्तरपरिकल्पस्तावत्तावदुदासीनो भावः । तस्माद् यद्रूपमादाय स्वरूपेणापि जनयतीत्युच्यते तस्य प्रागपि भावे कथमजनिः कदाचित् । अक्षेपक्रियाप्रत्यनीकस्वभावस्य वा[8] प्राबल्यस्य पर्यायानुवृत्तौ कथं कदाचिदपि कार्यसम्भवः ।

ननु यदि स एवैकः कर्ता स्याद् युक्तमेतत् । किन्तु सामग्री जनिका । ततः सहकार्य[9]-न्तरविरहवेलायां बलीयसोऽपि न कार्यप्रसव इति किमत्र विरुद्धम् । नहि भावः स्वरूपेण करोतीति स्वरूपेणैव करोति । सहकारिसहितादेव ततः कार्योत्पत्तिदर्शनात् । तस्माद् व्याप्तिवत् कार्यकारणभावोऽप्येकत्रान्ययोगव्यवच्छेदेनान्यत्रायोगव्यवच्छेदेनाव[10]बोद्धव्यः । तथैव लौकिकपरीक्षकाणां सम्प्रतिपत्तेरिति ।

अत्रोच्यते । यदि मिलिताः सन्तः कार्यं कुर्वते तदैकार्थकरणलक्षणं सहकारित्वमेषामस्तु, को निषेद्धा । मिलितैरेव तु तत् कार्यं कर्तव्यमिति कुतो लभ्यते । पूर्वापरयोरेकस्वभावत्वाद् भावस्य सर्वदा जननाजननयोरन्यतरनियतप्रसङ्गस्य दुर्वारत्वात् । तस्मात् सामग्री जनिका । नैकं जनकमिति स्थिरवादिनां मनोरथ[11]स्याप्यविषयः ।

---

1. मेकक्षणिक S. 2. क्षणिकत्वे S. 3. अपि omitted T. 4. विपय T. 5. करोति S. 6. च omitted T. 7. स्वभावा T. 8. वा omitted S. 9. सहकार्या T. 10. छेदेनना⁰ S. 11. मनोराज्यस्या⁰ T.

दृश्यते तावदिदमिति चेत् । दृश्यताम् । किन्तु पूर्वस्थितादेव सामग्रीमध्यप्रविष्टाद् भावात् कार्योत्पत्तिरन्यस्मादेव वा विशिष्टाद् भावादुत्पन्नादिति विवादपदम् । तत्र प्रागपि सम्भवे सर्वदैव कार्योत्पत्तिर्न वा कदाचिदपीति विरोधमसमाधाय चक्षुषी निमील्य तत एव कार्योत्पत्ति दर्शनादिति साध्यानुवादमात्रप्रवृत्तः कृपामर्हतीति[1] ।

न च प्रत्यभिज्ञादि[2]बलादेकत्वसिद्धिः । तत् पौरुषस्य लूनपुनर्जातकेशनखा[3]दावप्युपलम्भतो निर्दल[42b]नात् । लक्षणभेदस्य च दर्शयितुमशक्यत्वात् । स्थिरसिद्धिदूषणे चास्माभिः प्रपञ्चतो निरस्तत्वात् । तस्मात् साक्षात् कार्यकारणभावापेक्षयोभयत्राप्यन्ययोगव्यवच्छेदः । व्याप्तौ तु साक्षात् परम्परया कारणमात्रापेक्षया कारणे व्यापके[4]ऽयोगव्यवच्छेदः । कार्ये व्याप्येऽन्ययोगव्यावच्छेदः[5] । तथा तदतत्स्वभावे व्यापकेऽयोगव्यवच्छेदः । [6]तत्स्वभावे च व्याप्येऽन्ययोगव्यवच्छेदो विकल्पारूढरूपापेक्षया व्याप्तौ द्विविधमवधारणम् ।

ननु यदि पूर्वापरकालयोरेकस्वभावो भावः सर्वदाजनकत्वेनाजनकत्वेन वा व्याप्त उपलब्धः स्यात्, तदाऽयं प्रसङ्गः सङ्गच्छते । न च[7] क्षणभङ्गवादिना पूर्वापरकालयोरेकः कश्चिदुपलब्ध इति चेत् । तदेतदतिग्राम्यम् । तथा हि पूर्वापरकालयोरेकस्वभावत्वे सतीत्यस्या[8]यमर्थः । परकालभावी जनको यः स्वभावो भावस्य स एव यदि पूर्वकालभावी, पूर्वकालभावी वा योऽजनकः स्वभावः स एव यदि परकालभावी तदोपलब्धमेव जननमजननं वा स्यात् । तथा च सति सिद्धयोरेव स्वभावयोरेकत्वारोपे सिद्धमेव जननमजननं वाऽसज्यत इति ।

ननु कार्यमेव सहकारिणममेक्षते । नतु कार्योत्पत्तिहेतुः । यस्माद् द्विविधं सामर्थ्यं निजमागन्तुकं च सहकार्यन्तरम्, ततोऽक्षणिकस्यापि क्रमवत् सहकारिनानात्वादपि क्रमवत् कार्यनानात्वोपपत्तेरशक्यं भावानां प्रतिक्षणमन्यान्यत्वमुपपादयितुमिति चेत् ! उच्यते । भवतु तावन्निजागन्तुकभेदेन द्विविधं सामर्थ्यम् । तथापि यत् प्रातिस्विकं वस्तुस्वलक्षणमर्थक्रियाधर्मकमवश्य[9]मभ्युपगन्तव्यम् । तत् किं प्रागपि पश्चादेव वेति विकल्प्य यद्दूषणमुदीरितं तत्र किमुक्तमनेनेति न प्रतीमः । यत्तु कार्येणैव सहकारिणोऽपेक्षन्त इत्युपस्कृतं तदपि निरुपयोगम् । यदि हि[10] कार्यमेव स्वजन्मनि स्वतन्त्रं स्याद् युक्तमेतत् । केवलमेवं सति सहकारिसाकल्य[11]सामर्थ्यकल्पनमफलम् । स्वतन्त्रादेव हि कार्यं कादाचित्कं भविष्यति । तथा च सति सन्तो हेतवः सर्वथाऽसमर्थाः । असदेतत्[12] कार्यं स्वतन्त्रमिति विशुद्धा बुद्धिः ।

1. T omits इति । 2. आदि omitted T, A. 3. T & A omit नख ।
4. व्यापके omitted T. 5. कार्ये..व्यवछेदः omitted T.
6. T. adds कार्ये before तत्स्व⁰ । 7. S. omits च ।
8. अस्य omitted T. 9. अवश्यम् omitted T. 10. हि omitted T.
11. साकल्य omitted T. 12. असत्तु T.

अथ कार्यस्यैवायमपराधो यदिदं समर्थे कारणे सत्यपि कदाचिन्नोपपद्यत इति चेत् । न, तर्हि तत्कार्यं स्वातन्त्र्यात् । यद्भाष्यम् ।

सर्वावस्थासमानेऽपि कारणे यद्यकार्यता ।
स्वतन्त्रे कार्यमेवं स्यान्नतत्कार्यं तथा सति ।।

अथ न तद्भावे भवतीति तत्कार्यमुच्यते । कि[42b]न्तु तदभावेन भवत्येवेति व्यतिरेकप्राधान्यादिति चेत् । न । यदि हि स्वयं भवन् भावयेदेव हेतुः स्वकार्यम्, तदा तदभावप्रयुक्तोऽस्याभाव इति प्रतीतिः स्यात्[1] । नो चेद् यथा कारणे सत्यपि कार्यं[2]-स्वातन्त्र्यान्न भवति, तथा तदभावेऽपि स्वातन्त्र्यादेव न भूतमिति शङ्का केन निवार्येत[3] । यद् भाष्यम्[4]

तद्भावेऽपि न भावश्चेदभावेऽभाविता कुतः ।
तदभावप्रयुक्तोऽस्य सोऽभाव इति तत् कुतः ।

तस्माद् यथैव तद्भावे नियमेन न भवति। तथैव तद्भावे नियमेन भवेदेव । अभवच्च न तत्कारणतामात्मनः क्षमते ।

यच्चोक्तं प्रथमकार्योत्पादनकाले हि उत्तरकार्योत्पादन[5]स्वभावः। अतः प्रथमकाल एवाशेषाणि कार्याणि कुर्यादिति । तदिदं माता मे बन्ध्येत्यादिवत् स्ववचनविरोधादयुक्तम् । यो हि उत्तरकार्यजननस्वभावः स कथमादौ कार्यं कुर्यात्। न तर्हि तत्कार्यकरणस्वभावः। न हि नीलोत्पादनस्वभावः पीतादिकमपि करोतीति ।

अत्रोच्यते । स्थिरस्वभावत्वे हि भावस्योत्तरकालमेवेदं कार्यं न पूर्वकालमिति कुत एतत् । तदभावाच्च कारणमप्युत्तरकार्यकरणस्वभावमित्यपि कुतः ।

किं कुर्मः। उत्तरकालमेव तस्य[6] जन्मेति चेत् । अस्तु स्थिरत्वे तदनुपपद्यमानमस्थिरतामाविशतु ।

स्थिरत्वेऽप्येष एव स्वभावस्तस्य यदुत्तरक्षण एव करोतीति चेत् ।

उतेदानीं प्रमाणप्रत्याशा। धूमादत्रा[7]ग्निरित्यत्रापि स्वभाव एवास्य यदिदानीमत्र निरग्निरपि[8] धूम इति वक्तुं शक्यत्वात् । तस्मात् प्रमाणप्रसिद्धे[9] स्वभावावलम्बनम् । न तु स्वभावावलम्बनेन प्रमाणव्यालोपः । तस्माद् यदि कारणस्योत्तरकार्यकारकत्वम[10]भ्युपगम्य कार्यस्य प्रथमक्षणभावित्वमासज्यते,[11] स्यात् स्ववचनविरोधः । यदा तु कारणस्य स्थिरत्वे कार्यस्योत्तरकालत्वमेवासङ्गतमतः कारणस्याप्युत्तरकार्यजनकत्वं वस्तुतोऽसम्भवि तदा प्रसङ्गसाधनमिदम् । जननव्यवहारगोचरत्वं हि जननेन व्याप्तमिति प्रसाधितम् । उत्तर-

1. स्यात् omitted T. 2. कार्यस्वा० S. 3. निवार्यते T.
4. आह for भाष्यम् T. 5. जनन for उत्पादन T. 6. तस्य omitted T.
7. अत्र omitted S. 8. अपि omitted T. 9. प्र omitted S.
10. करणत्व T. 11. माशंक्यते T.

कार्यजननव्यवहारगोचरत्वं च स्वयमभ्युपगमात् अजनककार्यकरणकाल एव घटे धर्मिणि सिद्धम्। अतस्तन्मात्रानुबन्धिन उत्तराभिमतस्य कार्यस्य प्रथमे क्षणेऽजननमवधेय असङ्गः भिद्यते। न हि नीलकारकेऽपि पीतकारकत्वारोपे पीतस्यानुत्पत्तिप्रसङ्गः स्ववचनविरोधो नाम। तदेवं शक्तः सहकार्यनपेक्षितत्वाद् जननेन व्याप्तः[1]। अजनयंश्च शक्ताश[43a]क्तत्वविरुद्धधर्माध्यासाद् भिन्न एव।

ननु भवतु प्रसङ्गविपर्ययबलादेककार्यं प्रति शक्ताशक्तत्वलक्षणविरुद्धधर्माध्यासः। तथापि न ततो भेदः सिध्यति। तथा हि बीजमङ्कुरादिकं कुर्वद् यदि येनैव स्वभावेनाङ्कुरादिकं[2] करोति तेनैव क्षित्यादिकं तदा क्षित्यादीनामप्यङ्कुरस्वभावापत्तिः। अथ स्वभावत्वेन तु कारकत्वे[3] स्वभावानामन्योन्याभावाव्यभिचारित्वादेकत्र भावाभावौ परस्परविरुद्धौ स्यातामित्येकमपि[4] बीजं भिद्येत। एवं प्रदीपोऽपि तैलक्षयवर्त्तिदाहादिकम्। तथा पूर्वरूपमप्युत्तररूपरसगन्धादिकमनेकैः स्वभावैः परिकलितं[5] करोति। तेषां च स्वभावानामन्योऽन्याभावाव्यभिचाराद्विरुद्धानां योगे प्रदीपादिकं भिद्येत। न च भिद्यते।

तन्न विरुद्धधर्माध्यासो भेदकः। तथा बीजस्याङ्कुरं प्रति कारकत्वं गर्दभादिकं प्रत्यकारकत्वमिति कारकत्वाकारकत्वे अपि[6] विरुद्धौ धर्मौ। न च तद्योगेऽपि बीजभेदः। तदेवमेकत्र बीजे प्रदीपे रूपे च विपक्षे परिदृश्यमानः शक्ताशक्तत्वादिविरुद्धधर्माध्यासो न घटादेर्भेदक इति।

अत्र ब्रूमः। भवतु तावद् बीजादीनामनेककार्यकारित्वादनेकस्वभावभेदः। कः प्रस्तावो विरुद्धधर्माध्यासस्य। स्वभावानां ह्यन्योन्याभावाव्यभिचारे भेदः प्राप्तावसरो न विरोधः। विरोधस्तु यद्विधाने यन्निषेधो यन्निषेधे च[7] यद्विधानं तयोरेकत्र धर्मिणि परस्परपरिहारस्थिततया स्यात्। तदत्रैकः[8] स्वभावः स्वाभावेन विरुद्धो युक्तो भावाभाववत्। न तु स्वभावान्तरेण। घटत्ववस्तुत्ववत्। एवमङ्कुरादिकारित्वं तदकारित्वेन विरुद्धं न पुनर्वस्त्वन्तर[9]कारित्वेन। प्रत्यक्षव्यापारश्चात्र यथा नानाधर्मैरध्यासितं भावमभिन्नं व्यवस्थापयति[10] तथा तत्कार्यकारिणं कार्यान्तरकारिणं च। तद् यदि धर्मिभेदे सिद्धे एकत्र नानास्वभावा अन्योन्याभावाव्यभिचारिणावपि स्वभावावविरुद्धौ तत्कारकत्वान्याकारकत्वे वा विषयभेदादविरुद्धे तत् किमायातमेककार्यं प्रति शक्ताशक्तयोः परस्परप्रतियोगिनोर्विरुद्धयोर्धर्मयोः। एतयोरपि पुनर्विरोधे विरोधो नाम दत्तजलाञ्जलिः।

भवतु तर्ह्येककार्यापेक्षयैव सामर्थ्यासामर्थ्ययोर्विरोधः। केवलं यथा एकदेव कार्यं प्रति क्वचिद्देशे शक्तिर्देशान्तरे चाशक्तिरिति देशभेदादविरुद्धे शक्त्यशक्ती तथैकमेव कार्यं प्रति कालभेदादविरुद्धे। यथा[11] पूर्वं निःक्रियः स्फटिकः स एव[43b] पश्चात् सक्रियः इति चेत्।

1. जनयन् प्राप्तः T. 2. अङ्कुरंकरोति S. 3. १ स्वभावेन कारकत्वेभावा T.
4. एकत्वेऽपि T. 5. करितं S. 6. अपि omitted T.
7. च omitted S. 8. तत्रैकः T. 9. न्तराका T.
10. भिन्नमवस्था० T. 11. एकत्रैव ··· यथा omitted T.

उच्यते । नहि वयं परिभाषामात्रादेकत्र[1] कार्ये देशभेदादविरुद्धे शक्त्यशक्ती ब्रूमः । किं तु विरोधाभावात् । तद्देशकार्यकारित्वं हि तद्देशकार्याकारित्वेन विरुद्धम् । न पुनर्देशान्तरे[2] तत्कार्याकारित्वेनान्यकार्यकारित्वेन वा । यद्येवं तत्कालकार्यकारित्वं तत्कालकार्याकारित्वेन विरुद्धम् । न पुनः कालान्तरे तत्कार्याकारित्वेनान्यकार्याकारित्वेन वा । तत्कथं कालभेदेऽपि विरोध इति चेत् ।

उच्यते । द्वयोर्हि धर्मयोरेकत्र धर्मिण्यनवस्थितिनियमः परस्परपरिहारस्थितिलक्षणो विरोधः । स च साक्षात्परस्परप्रत्यनीकतया भावाभाववद् वा भवेत् । एकस्य वा नियमेन प्रमाणान्तरेण बाधनान्नित्यत्वसत्त्ववद् वा भवेदिति न कश्चिदर्थभेदः । तदत्रैकधर्मिणि तत् कालतत्[3]कार्यकारित्वाधारे कालान्तरे तत्कार्या[4]कारित्वस्यान्यकार्यकारित्वस्य वा[5] नियमेन प्रमाणान्तरेण बाधनाद्विरोधः । तथा हि यत्रैव धर्मिणि तत्कालकार्यकारित्वमुपलब्धं न तत्रैव कालान्तरे तत् कार्याकारित्वमन्यकार्यकारित्वं वा ब्रह्मणाप्युपसंहर्तुं शक्यते, येनानयोरविरोधः स्यात् । क्षणान्तरे कथितप्रसङ्गविपर्ययहेतुभ्यामवश्यम्भावेन धर्मिभेदप्रसाधनात् ।

न च प्रत्यभिज्ञानादेकत्वसिद्धिः । तत्पौरुषस्य निर्मूलितत्वात् । अत एव वज्रोऽपि पक्षकुक्षौ निक्षिप्तः । कथमसौ[6] स्फटिको वराकः कालभेदेनाभेदप्रसाधनाय दृष्टान्तीभवितुमर्हति । नन्वेवं समानकालकार्याणां देशभेदेऽपि धर्मिभेदो युक्ता[7] भेदप्रसाधकप्रमाणाभावात् । इन्द्रियप्रत्यक्षेण निरस्तविभ्रमाशङ्केनाभेदप्रसाधनाच्चेति न कालभेदेऽपि शक्त्यशक्त्योर्विरोधः स्वसमयमात्रादपहस्तयितुं शक्यः, समयप्रमाणयोरप्रवृत्तेरिति ।

तस्मात् सर्वत्र विरुद्धधर्माध्याससिद्धिरेव भेदसिद्धिः । विप्रतिपन्नं प्रति तु विरुद्धधर्माध्यासाद् भेदव्यवहारः साध्यते ।

ननु तथापि सत्त्वमिदमनैकान्तिकमेवासाधारणत्वात् सन्दिग्धव्यतिरेकत्वाद् वा । यथा हीदं क्रमाक्रमनिवृत्तावक्षणिकान्निवृत्तं तथा [8]सापेक्षत्वानापेक्षत्वयोरेकत्वानेकात्वयोरपि व्यापकयोर्निवृत्तौ क्षणिकादपि । तथा हि उपसर्पणप्रत्ययेन देवदत्तकरपल्लवादिना सहचरो बीजक्षणः पूर्वस्मादेव पुञ्जात् समर्थो जातोऽनपेक्ष आद्यातिशयस्य जनक[44a]इष्यते । तत्र च समानकुशूलजन्मसु बहुषु बीजसन्तानेषु कस्मात् किञ्चिदेव बीजं परम्परयाऽङ्कुरोत्पादानुगुणमुपजनयति बीजक्षणं नान्ये बीजक्षणा भिन्नसन्तानान्तःपातिनः । नहि उपसर्पणप्रत्ययात् प्रागेव तेषां[9] समानासमानसन्तानवर्तिनां बीजक्षणानां कश्चित् परम्परातिशयः । अथोपसर्पणप्रत्ययात्[10] प्राङ् न तत्सन्तानवर्तिनोऽपि जनयन्ति, परम्परयाप्यङ्कुरोत्पादानुगुणं बीजक्षणं बीजमात्रजननात् तेषाम् । कस्यचिदेव बीजक्षणस्योपसर्पणप्रत्ययसहभुव आद्यातिशयोत्पादः । हन्त

---

1. मात्रादेवकार्ये T. 2. वा omitted T. 3. तत् omitted S.
4. कार्या० omitted T. 5. वा omitted T. 6. किं पुन for कथमसौ T.
7. प्रयुक्तो T. 8. सापेक्षित्वा० T. 9. प्रागेतेषां T.
10. उपसर्पणात्प्राङ् S.

तर्हि तदभावे[1] सत्युत्पन्नोऽपि न जनयेदेव। तथा च[2] केवलानां व्यभिचारसम्भवादावाति-शयोत्पादकमङ्कुरं[3] वा प्रति क्षित्यादीनां परस्परापेक्षाणामेवोत्पादकत्वमकामेनापि[4] स्वीकर्तव्यम्। अतो न तावदनपेक्षा क्षणिकस्य सम्भविनी। नाप्यपेक्षा युज्यते समसमयक्षणयोः सव्येतरगो-विषाणयोरिवोपकार्योपकारकभावायोगात् इति नासिद्धः प्रथमो व्यापकाभावः। अपि चान्त्यो बीजक्षणोऽनपेक्षोऽङ्कुरादिकं कुर्वन् यदि येनैव रूपेणाङ्कुरं करोति तेनैव क्षित्यादिकं तदा क्षित्यादीनामप्यङ्कुरस्वाभाव्यापत्तिरभिन्नकारणत्वादिति न तावदेकत्वसम्भवः।

ननु रूपान्तरेण करोति। तथाहि बीजस्याङ्कुरं प्रत्युपादानत्वम्। क्षित्यादिकं तु प्रति सहकारित्वम्।

यद्येवं सहकारित्वोपादानत्वे किमेकं तत्त्वं नाना वा। एकं चेत् कथं रूपान्तरेण जनकम्। नानात्वे त्वनयोर्बीजाद्भेदोऽभेदो वा।

भेदे कथं बीजस्य जनकत्वं ताभ्यामेवाङ्कुरादीनामुत्पत्तेः। अभेदे वा कथं बीजस्य न नानात्वं भिन्नतादात्म्यात्। एतयोर्वैकत्वमेकतादात्म्यात्।

यदुच्येत क्षित्यादौ जनयितव्ये तदुपादानं पूर्वमेव क्षित्यादिबीजस्य रूपान्तरमिति। न तर्हि बीजं तदनपेक्षं क्षित्यादीनां जनकम्। तदनपेक्षत्वे तेषामङ्कुरोद्भू[5]वानुपपत्तेः। न चानुपकारकाण्यपेक्षन्त इति स्वयमेवोक्तम्। न च क्षणस्योपकारसम्भवोऽन्यत्र जननात् तस्याभेद्यत्वादित्यनेकत्वमपि नास्तीति द्वितीयोऽपि व्यापकाभावो न[6] सिद्धः। तस्मादसा-धारणानैकान्तिकत्वं[7] गन्धवत्त्ववदिति। यदि मन्येतानुपकारका अपि भवन्ति सहकारिणोऽपेक्ष-णीयाश्च कार्येणानुविहितभावाभावाच्च[8] सहकरणाच्च।

नन्वनेन क्रमेणाक्षणिकोऽपि भावोऽनुपकार[44b]कानपि सहकारिणः क्रमवतः [9]क्रमवत्कार्येणानुकृतान्वयव्यतिरेकानपेक्षिष्यते। करिष्यते च क्रमवत्सहकारिवशः क्रमेण कार्याणीति व्यापकानुपलब्धेरसिद्धेः। सन्दिग्धव्यतिरेकमनैकान्तिकं सत्त्वं 'क्षणिकत्व[10] सिद्धाविति।

अत्र ब्रूमः। कीदृशं पुनरपेक्षार्थमादाय क्षणिके सापेक्षानपेक्षत्वनिवृत्तिरुच्यते। किं सह-कारिणमपेक्षत इति सहकारिणाऽस्योपकारः कर्तव्यः।

अथ पूर्वावस्थितस्यैव बीजादेः सहकारिणा सह सम्भूयकरणम्। यद्वा पूर्वावस्थितस्येत्यन-पेक्ष्य[11]मिलितावस्थस्य करणमात्रमपेक्षार्थः। अत्र प्रथमपक्षस्यासम्भवादनपेक्षैव क्षणिकस्य कथमुभयव्यावृत्तिः। यद्यनपेक्षः क्षणिकः, किमित्युपसर्पणप्रत्ययाभावेऽपि न करोति। करोत्येव यदि स्यात्। स्वयमसम्भवी तु कथं करोतु। अथ तदा तादृग्वाऽसीदिति न कश्चिद्विशेषः।

1. यदभावे S. 2. च omitted S. 3. पादम S.
4. मकामके० T. 5. अङ्कुराद्भूद T. 6. नासिद्धः T.
7. ०नैकान्तिक सत्त्व० T. 8. च omitted S. 9. क्रमवत् omitted T.
10. ०त्व० omitted T. 11. ०पेक्ष S.

ततस्तादृक्[1]स्वभावसम्भवेऽप्यकरणं[2] सहकारिणि निरपेक्षतां न क्षमत इति चेत्। असम्बद्धमेतत्। वर्णसंस्थानसाम्येऽप्यकर्तुस्तत्स्वभावताया विरहात्। स चाद्यातिशयजनकत्वलक्षणः स्वभावविशेषो न समानासमानसन्तानवर्तिषु बीजक्षणेषु सर्वेष्वेव सम्भवी। किन्तु केषुचिदेव कर्मकरकरपल्लवसहचरेषु[3]।

नन्वेकत्र क्षेत्रे निष्पत्तिलवनादिपूर्वकमानीयैकत्र कुशूले क्षिप्तानि सर्वाण्येव बीजानि साधारणरूपाण्येव प्रतीयन्ते। तत् कुतस्त्योऽयमेकबीजसम्भवी विशेषोऽन्येषामिति चेत्[4]।

उच्यते। कारणं खलु सर्वत्र कार्ये द्विविधम्। दृष्टमदृष्टं चेति[5]। सर्वास्तिकप्रसिद्धमेतत्। ततः[6] प्रत्यक्षपरोक्षसहकारिप्रत्ययसाकल्यमसर्वविदा प्रत्यक्षतो न शक्यं प्रतिपत्तुम्। ततो भवेदपि कारणसामग्रीशक्तिभेदात्तादृशः स्वभावभेदः केषाञ्चिदेव बीजक्षणानां येन त एव बीजक्षणा[7] आद्यातिशयमङ्कुरं वा परम्परया जनयेयुः। नान्ये च[8] बीजक्षणाः।

ननु येषूपसर्पणप्रत्ययसहचरेषु स्वकारणशक्तिभेदादाद्यातिशयजनकत्वलक्षणो विशेषः सम्भाव्यते स तत्रावश्यमस्तीति कुतो लभ्यमिति चेत्। अङ्कुरोत्पादादनुमितादाद्यातिशयलक्षणात् कार्यादिति ब्रूमः। कारणानुपलब्धेस्तर्हि तदभाव एव भविष्यतीति चेत्। न। दृश्यादृश्यसमुदायस्य कारणस्यादर्शनेऽप्यभावसिद्धेः कारणानुपलब्धेः सन्दिग्धासिद्धत्वात्। तदयमर्थः:

पाणिस्पर्शवतः क्षणस्य न भिदा[9] भिन्ना[45a]न्यकालक्षणाद्
भेदो वेति मतद्वये मितिबलं यस्यास्त्वसौ जित्वरः।
तत्रैकस्य बलं निमित्तविरहः कार्याङ्गमन्यस्य वा
सामग्री तु न सर्वथेक्षणसहा कार्यन्तु मानानुगम्॥

इति तदेवं नोपकारोऽपेक्षार्थ इत्यनपेक्ष्यैव क्षणिकस्य सहकारिषु नोभयव्यावृत्तिः। अथ सम्भूयकरणमपेक्षार्थः, तदा यदि पूर्वस्थितस्येति विशेषणापेक्षा तदा क्षणिकस्य नैवं कदाचिदित्यनपेक्षैवाक्षीणा।

अथ पूर्वस्थितस्येत्यनपेक्ष्यमिलितावस्थितस्यैव करणमपेक्षार्थस्तदा सापेक्षतैव, नानपेक्षा। तथा च नोभयव्यावृत्तिरित्यसिद्धः प्रथमो व्यापकानुपलम्भः। तथैकत्वानेकत्वयोरपि व्यापकयोः क्षणिकाद् व्यावृत्तिरसिद्धा। तत्तद्व्यावृत्तिभेदमाश्रित्योपादानत्वाविकल्पनिकस्वभावभेदेऽपि परमार्थत एकेनैव स्वरूपेणानेककार्यनिष्पादनादुभयव्यावृत्तेरभावात्।

यच्च बीजस्यैकेनैव स्वभावेन कारकत्वे क्षित्यादीनाभङ्कुरस्वाभाव्यापत्तिरन्यथा कारणाभेदेऽपि कार्यभेदेऽपि[10] कार्यस्याहेतुकत्वप्रसङ्गादित्युक्तम्। तदसङ्गतम्। कारणैकत्वस्य कार्यभेदस्य च पटुनेन्द्रियप्रत्यक्षेण प्रसाधनात्। एककारणजन्यत्वैकत्वयोर्व्याप्तेः प्रतिहतत्वात्। प्रसङ्गस्यानुपदत्वात्।

---

1. तादृश T. 2. स्वभावेऽप्य T. 3. सहसचरेषु T.
4. विशेषो बीजक्षणानामिति T. 5. इति omitted S. 6. तत् T.
7. बीज omitted T. 8. च omitted S. 9. भेद S.
10. ऽपि omitted T.

यच्च[1] अकारणभेदे कार्याभेद इत्युक्तं तत्र सामग्रीस्वरूपं[2] कारणमभिप्रेतम्। सामग्री-सजातीयत्वे न कार्यविजातीयतेत्यर्थः। न पुनः सामग्रीमध्यगतेनैकेनानेकं कार्यं न कर्तव्यं नाम। एकस्यानेकोत्पत्तेः प्रत्यक्षसिद्धत्वात्। न चैवं प्रत्यभिज्ञानात् कालभेदेऽप्यभेदसिद्धिरित्युक्त-प्रायम्। न चेन्द्रियप्रत्यक्षं भिन्नदेशं सप्रतिघं दृश्यमर्थद्वयमेकमेवो[3]पलम्भयतीति सर्वचतुपलब्धम्। येन तत्रापि भेदशंका स्यात्। शंकायां वा पटुप्रत्यक्षस्याप्यपलापे सर्वप्रमाणो[4]च्छेदप्रसङ्ग इति।[5]

नापि सत्त्वहेतोः सन्दिग्धव्यतिरेकित्वम्[6], क्षित्यादेर्द्रव्यान्तरस्य बीजस्वभावत्वेनास्मा-भिरस्वीकृतत्वात्। अनुपकारिण्यपेक्षायाः प्रत्याख्याततात्[7]। व्यापकानुपलम्भस्यासिद्धत्वायोगात्।

तदेतौ द्वावपि व्यापकानुपलम्भावसिद्धौ न क्षणिकात् सत्त्वं निवर्तयत[3] इति नायम-साधारणो हेतुः।

अपि च विद्यमानो भावः सपक्षेतरयोरनिश्चितान्वयव्यतिरेको गन्धवत्त्वादिवदसाधारणो युक्तः। प्रकृतव्यापकानुपलम्भाच्च सर्वथाऽर्थक्रियैवासती[45b]उभाभ्यां वादिभ्या-मुभयस्माद्विनिवर्तितत्वेन निराश्रयत्वात्।

तत् कथमसाधारणानैकान्तिको भविष्यतीत्यलं[9] [10]प्रलापिनि[11] निर्बन्धेन।

तदेवं शक्तस्य क्षेपयोगात् समर्थव्यवहारगोचरत्वं जननेन व्याप्तमिति प्रसङ्गविपर्ययोः सत्त्वे हेतोरपि[12] नानैकान्तिकत्वम्। अतः क्षणभङ्गसिद्धिरिति स्थितम्।

इति साधर्म्यदृष्टान्तेऽन्वयरूपव्याप्त्या
क्षणभङ्गसिद्धिः समाप्ता ॥

कृतिरियं महापण्डितरत्नकीर्तिपादानामिति ॥[13]

1. यत्र T.
2. स्वरूप⁰ T.
3. मेवो⁰ T.
4. प्रमाणस्यो⁰ T.
5. इति omitted S.
6. नापि सन्दिग्धव्यतिरेकः S.
7. ख्यानात् S.
8. निवर्तत इति S.
9. भविष्यत्य⁰ S.
10. A adds बहु।
11. प्रलाप T.
12. सत्त्वहेतो T.
13. इति omitted T.

# क्षणभङ्गसिद्धिः

## व्यतिरेकात्मिका

[45b] नमस्तारायै ॥

व्यतिरेकात्मिका व्याप्तिराक्षिप्तान्वयरूपिणी ।
वैधर्म्यवति दृष्टान्ते सत्त्व[1]हेतोरिहोच्यते ॥

यत् सत् तत् क्षणिकम् । यथा घटः । सन्तश्चामी विवादास्पदीभूताः पदार्था इति स्वभाव[2]हेतुः ।

न तावदस्यासिद्धिः सम्भवति । यथायोगं प्रत्यक्षानुमानप्रमाणप्रतीते[3] धर्मिणि सत्त्वशब्देनाभिप्रेतस्यार्थक्रियाकारित्वलक्षणस्य साधनस्य प्रमाणसमधिगतत्वात् ।

न च विरुद्धानैकान्तिकते । व्यापकानुपलम्भात्मना विपर्यये[4] बाधकप्रमाणेन व्याप्तेः प्रसाधनात् । यस्य क्रमाक्रमौ न विद्येते न तस्यार्थक्रियासामर्थ्यम् । यथा शशविषाणस्य । न विद्येते चाक्षणिकस्य क्रमाक्रमाविति[4]व्यापकानुपलम्भः । न तावदयमसिद्धो हेतुः । अक्षणिके धर्मिणि क्रमाक्रमसद्भावायोगात् । तथाहि प्राप्तापरकालयोरेकत्वे नित्यत्वम् । तस्य क्रमाक्रमयोगे क्षणद्वये[5]प्यवश्यं भेदः । भेदाभेदयोश्च परस्परविरोधात् कुतोऽक्षणिके क्रमाक्रमसम्भवः । क्षणद्वयेऽपि भेदे क्रमाक्रमयोगः । अभेदे हि प्रथम एव क्ष[5]णे शक्तत्वात् । भाविनोऽपि कार्यस्य करणप्रसङ्गे कथं कार्यान्तरकरणे क्रमान्तरावकाशः । न चाक्षणिकस्याक्रमेणैव सकलस्वकार्यं कृत्वा स्वास्थ्यम् । क्षणान्तरेऽपि शक्तत्वात् पुनस्तत्कार्यकरणप्रसङ्गात् ।

तस्मादक्षणिकमिति पूर्वापरकालयोरभेदः। क्रमाक्रमयोग इति पूर्वापरकालयोर्भेदः । अनयोश्च परस्परपरिहार[6]स्थितिलक्षणो विरोधः ।

तदयमक्षणिके धर्मिणि क्रमाक्रमाभावलक्षणो हेतुर्नासिद्धो वक्तव्यः । क्रमाक्रमयोगित्वाक्षणिकत्वयोर्विरोधादेव[5] ।

1. सत्त्वे S. 2. स्वभावो S. 3. प्रतीति T.
4. विपर्यय S. 5. For यस्य क्रमाक्रमौ [45b.3] ··· विरोधादेव [45b.6] S has the following:—

व्यापकं चार्थक्रियाकारित्वस्य क्रमाक्रमिकार्यविषयत्वमेव । न पुनः कारणगतौ कार्यगतौ वा क्रमाक्रमावस्य व्यापकौ । कृत्वा करणलक्षणस्य क्रमस्य क्षणिकेऽसम्भवात् । कार्यगताभ्यां क्रमाक्रमाभ्यां कारणशक्तेर्व्याप्त्ययोगात् । तस्मात् कारणगतया क्रमाक्रमिकार्यविषयतया व्याप्यमाना कारणशक्तिः क्रमाक्रमव्याप्तेत्युच्यते । विषयेण विषयिनिर्देशात् । व्यवहारलाघवार्थम् । ततश्च यद्यपि सर्वत्र क्रमाक्रमौ सत्त्वस्य व्यापकावित्याद्युच्यते । तथापि क्रमाक्रमि कार्यविषयत्वमेव व्यापकं बोद्धव्यम् ।

ननु यदैकमेवकार्यमङ्कुरादिकमुत्पद्यते, तदा कथं कार्यगतक्रमाक्रमव्यवस्थेति चेत् ।

नापि विरुद्धः। सपक्षे भावात्।

न चानैकान्तिकः। क्रमाक्रमाभावस्यार्थक्रियासामर्थ्याभावेन व्याप्तत्वात्।

येनैव हि प्रत्यक्षात्मना प्रमाणेनापरप्रकाराभावाद्विधिभूताभ्यां क्रमाक्रमाभ्यां विधिभूतस्यार्थक्रियासामर्थ्यस्य व्याप्तिः प्रसाधिता, तेनैवार्थक्रियासामर्थ्याभावेन क्रमाक्रमाभावस्य व्याप्तिः प्रसाधितेति स्वीकर्त्तव्यम्। नहि वह्नादिना धूमादेर्व्याप्तिसाधकप्रमाणादपरं धूमाद्यभावेन वह्न्याद्यभावस्य व्याप्तिसाधकं किञ्चित् प्रमाणं शरणभूतमस्ति। तस्माद्विध्योरेव व्याप्तिसाधकं प्रमाणमभावयोरपि व्याप्तिसाधकमिति न्यायस्य दुरतिक्रमत्वात् सत्त्वाभा[2]वेन क्रमाक्रमाभावो व्याप्त एवेति नानैकान्तिक इत्यनवद्यो व्यापकानुपलम्भः। तदयमक्षणिकाद् विनिवर्तमानः स्वव्याप्यं सत्त्वं निवर्त्य क्षणिके विश्रामयतीति सत्त्वहेतोः क्षणभङ्गसिद्धिरप्यनवद्या।[1]

ननु व्यापकानुपलम्भतः सत्त्वस्य कथं स्वसाध्यप्रतिबन्धसिद्धिः, अस्याप्यनेकदोषदुष्टत्वात्। तथा हि न तावदयं प्रसङ्ग[3]हेतुः। साध्यधर्मिणि प्रमाणसिद्धत्वात्, पराभ्युपगमसिद्धत्वाभावात्, विपर्ययपर्यवसानाभावाच्च। अथ स्वतन्त्रः, तदाश्रयासिद्धः। अक्षणिकस्याश्रयस्यासम्भवात्[2]। अप्रतीतत्वाद्वा। प्रतीतिर्हि प्रत्यक्षेणानुमानेन विकल्पमात्रेण वा स्यात्।

---

उच्यते। यद्यप्येकमेव कार्यं भिन्नकालकार्यमपेक्ष्य क्रमस्तदभावाच्चाक्रमः। तत्कारित्वमेव क्रमाक्रमकारित्वम्। तथाप्यपेक्षणीयविषयभेदात् क्रमाक्रमयोरसाङ्कर्यमेव। पितृपुत्रत्ववत्।

कः पुनरसौ व्याप्तिप्रसाधको व्यापकानुपलम्भ इति चेत्।

उच्यते। यस्य क्रमाक्रमिकार्यविषयत्वं नास्ति न तत् शक्तम्, यथा शशविषाणम्। नास्ति च नित्याभिमतस्य भावस्य क्रमाक्रमिकार्यविषयत्वमिति व्यापकानुपलम्भः।

न तावदयमसिद्धो वक्तव्यः। नित्यस्य धर्मिणः क्रमाक्रमिकार्यविषयत्वेन व्यापकेन सह विरोधसद्भावात्। तथाहि पूर्वापरकालयोरेकत्वे नित्यत्वं क्षणद्वयेपि भेदे क्रमाक्रमित्वम्। ततश्च नित्यत्वं चेत्यभिन्नत्वं भिन्नत्वं चेत्युक्तं भवति। एतयोश्च परस्परपरिहारस्थितिलक्षणतया विरोधः। तत् कथं नित्ये क्रमाक्रमसम्भवः।

1. For येनैवहि प्रत्यक्षात्मना [45b.6]····· क्षणभङ्गसिद्धिरनवद्या [46a.2] S has the following:-

तथाहि न तावत् क्रमाक्रमाभ्यामन्य प्रकारोऽस्ति येनार्थक्रियासम्भावनायां क्रमाक्रमाभ्यामर्थक्रियाव्याप्तिर्न स्यात्। · तस्मादर्थक्रियामात्रानुबद्धतया तयोरन्यतरप्रकारस्य। उभयोरभावे चाभावादर्थक्रियामात्रस्येति ताभ्यां तस्य व्याप्तिसिद्धिः। पक्षीकृते च तयोरभावेनार्थक्रियाशक्त्यभावसिद्धौ कथमनेकान्त:। नहि व्याप्यव्यापकयोर्व्याप्यव्यापकभावसिद्धिमुद्धूय व्याप्याभावेन व्यापकाभावस्य व्याप्तिसिद्धावुपायान्तरमस्तीति निरवद्यो व्यापकानुपलम्भः। सत्त्वस्य क्षणिकत्वेन व्याप्तिं साधयत्येव।

2. स्याभावात् T.

प्रथमपक्षद्वये साक्षात् पारम्पर्येण वा स्वप्रतीतिलक्षणार्थकारित्वे[4] मौलः साधारणो हेतुः व्यापकानुपलम्भश्च स्वरूपासिद्धः स्यात्। अर्थक्रियाकारित्वे क्रमाक्रमयोरन्यतरस्या[1]-वश्यम्भावात्।

अन्तिमपक्षे तु न कश्चिद्धेतुरनाश्रयः स्यात्। विकल्पमात्रसिद्धस्य धर्मिणः सर्वत्र सुलभ-त्वात्।

अपि च, तत् कल्पनाज्ञानं प्रत्यक्षपृष्ठभावि वा स्यात्, लिङ्गजन्म वा, संस्कारजं वा, सन्दिग्धवस्तुकं वा, अवस्तु[5]कं वा।

तत्राद्यपक्षद्वयेऽक्षणिकस्य सत्तैवाव्याहता। कथं बाधकावतारः।

तृतीये तु न सर्वदाऽक्षणिकसत्तानिषेधः। तदर्पितसंस्काराभावे तत्स्मरणायोगात्।

चतुर्थे तु सन्दिग्धाश्रयत्वं हेतुदोषः।

पञ्चमे च तद्विषयस्याभावो न तावत् प्रत्यक्षतः सिध्यति। अक्षणिकात्मनः सर्वदैव त्वन्मतेऽप्रत्यक्षत्वात् न चा[6]नुमानतस्तदभावस्तत्प्र[2]तिबद्धलिङ्गानुपलम्भादित्याश्रयासिद्धिस्ता-वदुद्धता[3]। एवं दृष्टान्तोऽपि प्रतिहन्तव्यः।

स्वरूपासिद्धोऽप्ययं हेतुः। स्थिरस्यापि क्रमाक्रमिसहकार्यपेक्षया क्रमाक्रमाभ्यामर्थक्रियोप-पत्तेः। नापि क्रमयौगपद्यपक्षोक्तदोषप्रसङ्गः। तथा हि क्रमिसहकार्यपेक्षया क्रमिकार्यकारित्वं तावदविरुद्धम्।

तथा च शंकरस्य[46b1] संक्षिप्तोऽयमभिप्रायः। सहकारिसाकल्यं हि सामर्थ्यम्। तद्वैकल्यं चासामर्थ्यम्। न च तयोराविर्भावतिरोभावाभ्यां तद्वतः काचित् क्षतिः। तस्य ताभ्यामन्यत्वात्। तत्कथं सहकारिणोऽनपेक्षकार्यकरणप्रसङ्ग इति।

त्रिलोचनस्याप्ययं संक्षिप्तार्थः। कार्यमेव हि सहकारिणमपेक्षते। न च कार्योत्पत्तिहेतुः। यस्मात् द्विविधं सामर्थ्यं निजमागन्तुकं च [2]सहकार्यन्तरम्, ततोऽक्षणिकस्यापि क्रमवत्सह-कारिनानात्वादपि क्रमवत्कार्यनानात्वोपपत्तेरशक्यं भावानां प्रतिक्षणमन्यान्यत्वमुपपादयितु-मिति।

न्यायभूषणोऽपि लपति। प्रथमकार्योत्पादनकाले हि उत्तरकार्योत्पादनस्वभावः। अतः प्रथम-काल एवाशेषाणि कार्याणि कुर्यादिति चेत्।

तदिदं माता मे[3]बन्ध्येत्यादिवत् स्ववचनविरोधादयुक्तम्। यो हि उत्तरकार्यजनन-स्वभावः स कथमादौ तत् कार्यं कुर्यात्। न तर्हि तत्कार्यकरणस्वभावः। नहि नीलोत्पादन-स्वभावः पीतादिकमपि करोतीति।

1. रन्यतरस्य omitted T. 2. S omits तत्। 3. दनिवार्या T.

वाचस्पतिरपि पठति । नन्वयमक्षणिकः स्वरूपेण कार्यं जनयति । तच्चास्य स्वरूपं तृतीया-दिष्विव क्षणेषु द्वितीयेऽपि क्ष[4]णे सदिति तदापि जनयेत् । अकुर्वन् वा तृतीयादिष्वपि न कुर्वीत । तस्य तादवस्थ्यात् । अतादवस्थ्ये वा तदेवास्य क्षणिकत्वम् ।

अत्रोच्यते । सत्यं स्वरूपेण कार्यं जनयति न तु तेनैव । सहकारिसहितादेव ततः कार्यो-त्पत्तिदर्शनात् । तस्माद् व्याप्तिवत्कार्यकारणभावोऽप्येकत्रान्ययोगव्यवच्छेदेन । अन्यत्रायोगव्यवच्छेदेन[5]नाववोद्धव्यः । तथैव लौकिकपरीक्षकाणां सम्प्रतिपत्तेरिति न क्रमिककार्यकारित्वपक्षोक्तदोषावसरः ।

नाप्यक्षणिके यौगपद्यपक्षोक्तदोषावकाशः । ये हि कार्यमुत्पादितवन्तो द्रव्यविशेषास्तेषां व्यापारस्य नियतकार्योत्पादनसमर्थस्यं[1] निष्पादिते कार्ये[2]ऽनुवर्तमानेष्वपि तेषु द्रव्येषु निवृत्तार्था-[3] दूना सामग्री[6]जायते । तत्कथं निष्पादितं निष्पादयिष्यति । नहि दण्डादयः स्वभा-वेनैव कर्तारो येनामी निष्पत्तेराररभ्य कार्यं विदध्युः । किं तर्हि व्यापारावेशिनः । न चेयता स्वरूपेण न कर्तारः । स्वरूपकारकत्वनिर्वाहपरतया व्यापारसमावेशादिति ।

किं च क्रमाक्रमाभावश्च भविष्यति । न च सत्त्वाभाव इति सन्दिग्धव्यतिरेकोऽप्ययं व्यापकानुलम्भः । न हि क्रमाक्रमा[47a.1]भ्यामन्यस्य प्रकारस्याभावः सिद्धः । विशेष-निषेधस्य शेषाभ्यनुज्ञाविषयत्वात् ।

किं च प्रकारान्तरस्य दृश्यत्वे नात्यन्तनिषेधः । अदृश्यत्वे तु नासत्तानिश्चयो विप्रकर्षि-णामिति न क्रमाक्रमाभ्यामर्थक्रियासामर्थ्यस्य व्याप्तिसिद्धिः । अतः सन्दिग्धव्यतिरेकोऽपि व्यापकानुपलम्भः ।

किं च दृश्यादृश्यसहकारिप्रत्ययसाकल्यवतः क्रमयौगपद्यस्यात्यन्तपरोक्षत्वात्[2] तेन व्याप्तं सत्त्वमपि परोक्षमेवेति न तावत्प्रतिबन्धः प्रत्यक्षतः सिध्यति । नाप्यनुमानतः । तत्प्रतिबद्धलिङ्गाभावादिति ।

अपि च क्रमाक्रमाभ्यामर्थक्रियाकारित्वं व्याप्तमित्यतिसुभाषितम् । यदि क्रमेण व्याप्तं कथ-मक्रमेण : अथाक्रमेण न तर्हि क्रमेण । क्रमाक्रमाभ्यां व्याप्तमिति तु ब्रुवता व्याप्तेरेवाभावः प्रदर्शितो भवति । नहि भवत्यग्निर्धूमभावा[4]भावाभ्यां व्याप्त इति । अतो व्याप्तेरनैकान्ति-कत्वम् ।

अपि च किमिदं बाधकमक्षणिकानामसत्तां साधयति । उतस्विदक्षणिकात् सत्त्वस्य व्यति-रेकम् । अथ सत्त्वक्षणिकत्वयोः प्रतिबन्धम् ।

न पूर्वो विकल्पः । उक्तक्रमेण हेतोराश्रयासिद्धत्वात् ।

न च द्वितीयः । यतो व्यापकनिवृत्तिसहिता व्या[4]प्यनिवृत्तिर्व्यतिरेकशब्दस्यार्थः । सा च यदि प्रत्यक्षेण प्रतीयते तदा तद्धेतुः स्यादिति सत्त्वमनैकान्तिकम् । व्यापकानुपलम्भः स्वरूपासिद्धः । अथ सा विकल्प्यते तदा पूर्वोक्तक्रमेण पञ्चधा विकल्प्य विकल्पो दूषणीयः ।

---

1. सामर्थ्यस्य T. 2. कार्ये omitted T. 3. निवृत्तादूना T.

4. ति धूमो वह्निभावा correction in the margin (Separate hand) in T.

अतएव न तृतीयोऽपि विकल्पः। व्यतिरेकासिद्धौ सम्बन्धासिद्धेः।

किं च न भूतलवदत्राक्षणि[5]को धर्मो दृश्यते। न च स्वभावानुपलम्भे व्यापकानुपलम्भः कस्यचित् दृश्यस्य प्रतिपत्तिमन्तरेणान्तर्भावयितुं शक्यत[1] इति।

किं चास्याभावधर्मत्वे आश्रयासिद्धत्वमितरेतराश्रयत्वं च। भावधर्मत्वे विरुद्धत्वं च[2]। उभयधर्मत्वे चानैकान्तिकत्वमिति न त्रयीं दोषजातिमतिपतति[3]।

यत् पुनरुक्तमक्षणिकत्वे क्रमयौगपद्याभ्या[6]मर्थक्रियाविरोधादिति। तत्र विरोधसिद्धिमनुसरता विरोध्यपि प्रतिपत्तव्यः। तत्प्रतीतिनान्तरीयकत्वाद् विरोधसिद्धेः। यथा तुहिनदहनयोः[4] सापेक्षध्रुवभावयोश्च। प्रतियोगी चाक्षणिकः प्रतीयमानः प्रतीतिकारित्वात् स क्षेव स्यात्, अजनकस्याप्रमेयत्वात्।

संवृतिसिद्धेनाक्षणिकत्वेन विरोधसिद्धिरिति चेत्। संवृतिसिद्धमपि वास्तवं काल्पनिकं [47b.1] वा स्यात्।

यदि वास्तवं कथं तस्यासत्त्वम्। कथं चार्थक्रियाकारित्वविरोधः। अर्थक्रियां कुर्वद्धि वास्तवमुच्यते।

अथ काल्पनिकम्। तत्र किं विरोधो वास्तवः, काल्पनिको वा। न तावद् वास्तवः। कल्पितविरोधिविरोधत्वात्, बन्ध्यापुत्रविरोधवत्। अथ विरोधोऽपि काल्पनिकः। न तर्हि सत्त्वस्य व्यतिरेकः पारमार्थिक इति क्षणभङ्गो दत्तजलाञ्जलिरिति।

अयमेव चोद्यप्रबन्धोऽस्मद् गुरुभिः[5] संगृही[2]तः।

नित्यं नास्ति न वा प्रतीतोविषयस्तेनाश्रयासिद्धता
हेतोः स्वानुभवस्य चाक्षतिरतः क्षिप्तः सपक्षोऽपि च।
शून्यं च द्वितयेन सिध्यति न चासत्तापि सत्ता यथा
नो नित्येन विरोधसिद्धिरसता शक्या क्रमादेरपि।

इति। [क्षणभङ्गाध्याये]

अत्रोच्यते। इह वस्तुन्यपि धर्मिधर्मव्यवहारो दृष्टो यथा गवि गोत्वम्, पटे शुक्लत्वम् तुरगे गमनमित्यादि। अ[3]वस्तुन्यपि धर्मिधर्मव्यवहारो दृष्टो यथाशशविषाणे तीक्ष्णत्वाभावो बन्ध्यापुत्रे वक्तृत्वाभावो गगनारविन्दे गन्धाभाव इत्यादि। तत्रावस्तुनि धर्मित्वं नास्तीति किं वस्तुधर्मेण धर्मित्वं नास्ति। आहोस्विदवस्तु धर्मेणापि।

प्रथमपक्षे सिद्धसाधनम्। द्वितीयपक्षे तु स्ववचनविरोधः। यदाहुर्गुरवः।

धर्मस्य कस्यचिदवस्तुनि मान[4]सिद्धा
बाधाविधिव्यवहृतिः किमिहास्ति नो वा
क्वाप्यस्ति चेत् कथमियन्ति न दूषणानि
नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः।

---

1. शक्य इति S. 2. च omitted T.
3. अभिपतति T. 4. दहनतुहिनयोः T. 5. ज्ञानश्रीमित्रैः।

अवस्तुनो धर्मित्वस्वीकारपूर्वकत्वस्य व्यापकस्याभावादा[1]श्रयासिद्धिदूषणस्यानुपन्यासप्रसङ्ग इत्यर्थः। येनैव हि वचनेनावस्तुनो धर्मित्वं प्रतिषिध्यते । तेनैवावस्तुनो धर्मित्वाभावेन धर्मेण ध[5]र्मित्वमभ्युपगतम्[2]। परस्तु प्रतिषिध्यत इतिव्यक्तमिदमीश्वरचेष्टितम् । तथा ह्यवस्तुनो धर्मित्वं नास्तीति वचनेव धर्मित्वाभावः किमवस्तुनि[3] विधीयत, अन्यत्र वा, न वा क्वचिदपीति त्रयः पक्षाः।

प्रथमपक्षेऽवस्तुनो न धर्मित्वनिषेधः। धर्मित्वाभावस्य धर्मस्य तत्रैव विधानात्।

द्वितीये[1]ऽवस्तुनि किमायातम्। अन्यत्र धर्मित्वाभाव[6]विधानात्।

तृतीयस्तु पक्षो व्यर्थ एव निराश्रयत्वादिति कथमवस्तुनो धर्मित्वनिषेधः। तस्माद्यथा प्रमाणोपन्यासः प्रमेयत्वास्वीकारपूर्वकत्वेन व्याप्तः, वाचकशब्दोपन्यासो वा वाच्यस्वीकारपूर्वकत्वेन व्याप्तस्तथाऽवस्तुनो धर्मित्वं नास्तीति वचनोपन्यासोऽवस्तुनो धर्मित्वस्वीकारपूर्वकत्वेन व्याप्तः। अन्यथा तद्वचनोपन्यासस्य व्यर्थत्वात्। तद् यदि वचनोपन्यासो व्याप्यधर्मस्तदाऽवस्तुनो धर्मित्वस्वीकारोऽपि व्यापकधर्मो दुर्वारः। अथ न व्यापकधर्मः, तदा व्याप्यस्यापि वचनोपन्यासस्यासम्भव इति [48a.1] मूकतैवात्र बलादायातेति कथं न स्ववचनप्रतिरोध[5]सिद्धिः।

यदाहाचार्यः[6]। नह्यब्रुवन् परं बोधयितुमीशः। ब्रुवन् वा दोषमिमं परिहर्तुमिति महति संकटे प्रवेशः।

अवस्तुप्रस्तावे सहृदयानां मूकतैव युज्यत इति चेत्। अहो महद्वैदग्ध्यम्। अवस्तुप्रस्तावे स्वयमेव यथाशक्ति वलित्वा भग्नो मूकतैव न्यायप्राप्तेति परिभाषया निःसर्तुमिच्छति। न ह्यवस्तुप्रस्तावो [2] राजदण्डेन विना चरणमर्दनादिनाऽनिष्टिमात्रेण वा प्रतिषेद्धुं शक्यते। ततश्चात्रापि क्रमाक्रमभावस्य साधनत्वे सत्त्वाभावस्य च साध्यत्वे सन्दिग्धवस्तुभावस्यावस्त्वात्मनो वा क्षणिकस्य धर्मित्वं केन प्रतिषिध्यते[7]।

त्रिविधो हि धर्मो दृष्टः। कश्चित् वस्तुनियतो नीलादि। कश्चिदवस्तुनियतो यथा सर्वोपाख्याविरहः। कश्चिदुभयसा[3]धारणो यथाऽनुपलब्धिमात्रम्। तत्र वस्तुधर्मेणावस्तुनो धर्मित्वनिषेध इति युक्तम्[8]। न त्ववस्तुधर्मेण। वस्त्ववस्तुधर्मेण वा। स्ववचनस्यानुपन्यासप्रसङ्गादित्यक्षणिकस्याभावे सन्देहेऽपि[9] वाऽवस्तुधर्मेण धर्मित्वमव्याहतमिति नायमाश्रयासिद्धो व्यापकानुपलम्भः।।

अक्षणिकाप्रतीता[10]वाश्रयासिद्धो हेतुरिति युक्तमुक्तम्। तदप्रतीतौ तद्व्यवहारायोगात्। केवलमसौ व्यवहाराङ्गभूता प्रतीतिर्वस्त्ववस्तुनोरेकरूपा न भवति। साक्षात्पारम्पर्येण वस्तु-

1. स्याभावे S. 2. The sentence is difective in S.
3. अवस्तु S. 4. स्यव्यर्थत्वात्......वचनोपन्यासस्या omitted T.
5. विरोध T. 6. यदाहाचार्यः omitted S. 7. प्रतिहन्यते S.
8. इत्युक्तं T. 9. अपि omitted S. 10. तावयमाश्र॰ S.

सामर्थ्यभाविनी हि वस्तुप्रतीतिः। यथा प्रत्यक्षमनुमानं प्रत्यक्षपृष्ठभावी च विकल्पः। अवस्तुनस्तु सामर्थ्याभावाद्विकल्पमात्रमेव प्रतीतिः। वस्तुनो हि वस्तुबलभाविनी प्रतीतिर्यथा सा[5]क्षात्प्रत्यक्षम्, परम्परया तत्पृष्ठभावी विकल्पोऽनुमानं च। अवस्तुनो न वस्तुबलभाविनी प्रतीतिस्तत्कारकत्वेनावस्तुत्वहानिप्रसङ्गात्। तस्माद्विकल्पमात्रमेवावस्तुनः प्रतीतिः। नह्यभावः कश्चिद्विग्रहवान् यः साक्षात्कर्तव्योऽपि तु व्यवहर्तव्यः। स च व्यवहारो विकल्पादपि सिध्यत्येव। अन्यथा सर्वजनप्रसिद्धोऽ[6]वस्तुव्यवहारो न स्यात्। इष्यते च। तद्धर्मित्वप्रतिषेधानुबन्धावित्यकामेनापि विकल्पमात्रसिद्धोऽक्षणिकः स्वीकर्तव्य इति नायमप्रतीतत्वादप्याश्रयासिद्धो हेतुर्वक्तव्यः। ततश्चाक्षणिकस्य विकल्पमात्रसिद्धत्वे यदुक्तम्,

न कश्चिद्धेतुरनाश्रयः विकल्पमात्रसिद्धस्य धर्मिणः सर्वत्र सुलभत्वादिति।

तदसङ्गतम्। विकल्पमात्रसिद्धस्य धर्मिणः सर्व[48b1]त्र सम्भवेऽपि वस्तुधर्मेण धर्मित्वायोगात्। वस्तुधर्महेतुत्वापेक्षया आश्रयासिद्धस्यापि हेतोः सम्भवात्। यथात्मनो विभुत्वसाधनार्थमुपन्यस्तं सर्वत्रोपलभ्यमानगुणत्वादिति साधनम्। विकल्पश्चायं हेतूपन्यासात्। पूर्वं सन्दिग्धवस्तुकः। समर्थिते तु हेतावपवस्तुक इति ब्रूमः।

न चात्र सन्दिग्धाश्रयत्वं नाम हेतुदोषः। आस्तां तावत्। सन्दिग्धस्यावस्तुनोऽपि विक[2]ल्पमात्रसिद्धस्यावस्तुधर्मापेक्षया धर्मित्वप्रसाधनात्। वस्तुधर्महेत्वपेक्षयैव सन्दिग्धाश्रयस्य हेत्वाभासस्य व्यवस्थापनात्। यथेह निकुञ्जे मयूरः केकायितादिति। अवस्तुकविकल्पविषयस्यासत्त्वं तु व्यापकानुपलम्भादेव प्रसाधितम्। एवं दृष्टान्तस्यापि व्योमोत्पला[1]देर्धर्मित्वं विकल्पमात्रेण प्रतीतिश्चावगन्तव्या। [3] तदेवमवस्तुधर्मापेक्षयाऽवस्तुनो धर्मित्वस्य विकल्पमात्रेण प्रतीतेश्चा[2]पह्नोतुमशक्यत्वान्नायमाश्रयासिद्धो हेतुः। न च दृष्टान्तक्षतिः॥

न चैष स्वरूपासिद्धः। अक्षणिके धर्मिणि क्रमाक्रमयोर्व्यापकयोरयोगात्। तथाहि यदि तस्य प्रथमे क्षणे द्वितीयादिक्षणभावि कार्यकरणसामर्थ्यमस्ति तदा प्रथमक्षणभावि[3]कार्यवत् द्वितीयादिक्षणभाव्यपि कार्यं[4] कुर्यात्। [4]समर्थस्य क्षेपायोगात्। अथ तदा सहकारिसाकल्यलक्षणसामर्थ्यं नास्ति। तद्वैकल्यलक्षणस्यासामर्थ्यस्य सम्भवात्। नहि भावः स्वरूपेण करोतीति स्वरूपेणैव करोति। सहकारिसहितादेव ततः कार्योत्पत्तिदर्शनादिति चेत्। यदा तावदमी मिलिताः[5] सन्तः कार्यं कुर्वते तदैकार्यकरणलक्षणं सहकारित्वमेषा[5]मस्तु को निषेद्धा। मिलितैरेव तु तत्कार्यं कर्त्तव्यमिति कुतो लभ्यते। पूर्वापरकालयोरेकस्वभावत्वाद् भावस्य। सर्वदा जननाजननयोरन्यतरनियमप्रसङ्गस्य दुर्वारत्वात्। तस्मात् सामग्री जनिका, नैकं जनकमिति स्थिरवादिनां मनोराज्यस्याप्यविषयः।

किं कुर्मो दृश्यते तावदेवमिति चेत्। दृश्यतां किं तु पूर्वस्थितादेव [6] पश्चात् सामग्रीमध्यप्रविष्टाद् भावात् कार्योत्पत्तिरन्यस्मादेव विशिष्टसामग्रीसमुत्पन्नात् क्षणादिति

1. व्योमादे S. 2. प्रतीतिः T. 3. कार्यकरण......भावि marginally added separate hand T. 4. कार्यं added separate hand T. 5. मीलिताः S.

विवादपदमेतत्। तत्र प्रागपि सम्भवे[1] सर्वदैव कार्योत्पत्तिर्न वा[2] कदाचिदपीति विरोधमसमाधाय तत एव कार्योत्पत्तिरिति साध्यानुवादमात्रप्रवृत्तः कृपामर्हति।

न च प्रत्यभिज्ञानादेवैकत्वसिद्धिः। तत्पौरुषस्य लूनपुनर्जातकेशकु[49a.1]शकदलीस्तम्भादौ निर्दलनात्। विस्तरेण च प्रत्यभिज्ञादूषणमस्माभिः स्थिरसिद्धदूषणे प्रतिपादितमिति तत एवावधार्यम्।

ननु कार्यमेव सहकारिणमपेक्षते। न तु कार्योत्पत्तिहेतुः। यस्माद् द्विविधं सामर्थ्यं निजमागन्तुकं च सहकार्यन्तरं, ततोऽक्षणिकस्यापि क्रमवत् सहकारिनानात्वादपि क्रमवत्कार्यनानात्वमिति चेत्। भवतु तावत् निजागन्तुकभेदेन द्विविधं[2]सामर्थ्यम्। तथापि तत् प्रातिस्विकं वस्तुस्वलक्षणं सद्यः क्रियाधर्मकमवश्याभ्युपगन्तव्यम्। तद्यदि प्रागपि, प्रागपि कार्यप्रसङ्गः। अथ पश्चादेव, न तदा स्थिरो भावः।

न च कार्यं सहकारिणोऽपेक्षत इति युक्तम्, तस्यासत्त्वात्। हेतुश्च सन्नपि यदि स्वकार्यं न करोति, तदा तत्कार्यमेव तन्न स्यात्। स्वातन्त्र्यात्।

यच्चोक्तम्। यो हि उत्तरकार्यजननस्वभावः[3]स कथमादौ कार्यं कुर्यात्। न तर्हि तत्कार्यकरणस्वभावः। न हि नीलोत्पादनस्वभावः पीतादिकमपि करोतीति।

तदसङ्गतम्। स्थिरस्वभावत्वे भावस्योत्तरकालमेवेदं न पूर्वकालमिति कुत एतत्। तद्भावाच्च कारणमप्युत्तरकार्यस्वभावमित्यपि कुतः।

किं कुर्मः। उत्तरकालमेव तस्य जन्मेति चेत्। स्थिरत्वे तदनुपपद्यमानमस्थिरता[4]माविशतु। स्थिरत्वेऽप्येष एव स्वभावस्तस्य यदुत्तरक्षण एव कार्यं करोतीति चेत्। न, प्रमाणबाधिते स्वभावाभ्युपगमायोगादिति न तावदक्षणिकस्य क्रमिकार्यकारित्वमस्ति। नाप्यक्रमिकार्यकारित्वसम्भवः। द्वितीयेऽपि क्षणे कारकस्वरूपसद्भावे पुनरपि कार्यकरणप्रसङ्गात्।

कार्ये निष्पन्ने तद्विषयव्यापारभावादूना सामग्री [5]न निष्पादितं निष्पादयेदिति चेत्। न, सामग्रीसम्भवासम्भवयोरपि सद्यः क्रियाकारकस्वरूपसम्भवे जनकत्वमवधार्यमिति प्रागेव प्रतिपादनात्। कार्यस्य हि निष्पादितत्वात् पुनः कर्तुमशक्यत्वमेव कारणमसमर्थमावेदयति। तदयमक्षणिके क्रमाक्रमिकार्यकारित्वाभावो न सिद्धः[3]। न च क्रमाक्रमाभ्यामपरप्रकारसम्भ[6]वो येन ताभ्यामव्याप्तौ सन्दिग्धव्यतिरेको हेतुः स्यात्। प्रकारान्तरशङ्कायां तस्यापि दृश्यत्वादृश्यत्व[4]प्रकारद्वयदूषणेऽपि स्वपक्षेऽप्यनाश्वासप्रसङ्गात्। तस्मादन्योऽन्यव्यवच्छेदस्थितिर्नापरः प्रकारः सम्भवति। स्वरूपाप्रविष्टस्य वस्तुनोऽवस्तुनो वाऽतत्स्वभावत्वात्[5]। प्रकारान्तरस्यापि क्रमस्वरूपाप्रविष्टत्वात्। तथातीन्द्रियस्य सहकारिणोऽदृश्य[49b.1]त्वेऽप्ययोगव्यव-

1. सम्भवेदिति T. 2. च T.
3. नासिद्धः T. 4. दृश्यादृश्यत्व S. 5. वाऽन्यत्वात् S.

व्यवच्छेदेन दृश्यसहकारिसहितस्य सत्वस्य दृश्यक्रमाक्रमाभ्यां व्याप्तिः प्रत्यक्षादेव सिध्यति । एवं क्रमाक्रमाभ्यामर्थक्रियाकारित्वं व्याप्तमिति क्रमाक्रमयोरन्योऽन्यव्यवच्छेदेन स्थितत्वादेतत्प्रकार-द्वयपरिहारेणार्थक्रियाकारित्वमन्यत्र न गतमित्यर्थः । अतएवैतयोर्विनिवृत्तौ निवर्तते[1] ।

त्रिलोचनस्यापि विकल्पत्रये प्रथमदूषण[2]माश्रयासिद्धिदोषपरिहारतो निरस्तम् ।

द्वितीयं चासङ्गतम् । विकल्पज्ञानेन व्यतिरेकस्य प्रतीतत्वात् । नह्यभावः कश्चिद्बहिर्ग्रह-वान् यः साक्षात्कर्तव्यः, अपितु विकल्पादेव व्यवहर्तव्यः । न ह्यभावस्य विकल्पादन्या प्रतिपत्तिरप्रतिपत्तिर्वा सर्वथा । उभयथापि तद्व्यवहारहानिप्रसङ्गात् । एवं वैधर्म्य-दृष्टान्तस्य हेतुव्यतिरेकस्य च वि[3]कल्पादेव प्रतिपत्तिः[2] ।

तृतीयमपि दूषणमसङ्गतम् । व्यापकानुपलम्भेन निर्दोषेण सत्वस्य क्षणिकत्वेन[3] व्याप्तेरव्याहतत्वात् ।

तदयं व्यापकानुपलम्भोऽक्षणिकस्यासत्वम् । सत्वस्य ततो व्यतिरेकं क्षणिकत्वेन व्याप्तिं च साधयत्येकव्यापारात्मकत्वादिति स्थितम् ।

ननु व्यापकानुपलब्धिरिति यद्यनुपलब्धिमात्रं तदा न तस्य साध्यबुद्धिजनक[4]त्व-मवस्तुत्वात् । न चान्योपलब्धिर्व्यापकानुपलब्धिरभिधातुं शक्या भूतलादिवदन्यस्य कस्य-चिदनुपलब्धेरिति चेत् । तदसङ्गतम् । धर्म्युपलब्धेरेवान्यत्रानुपलब्धितया व्यवस्थाप-नात् । यथा हि[4] नेह शिंशपा वृक्षाभावादित्यत्र वृक्षापेक्षया केवलप्रदेशस्य धर्मिण उप-लब्धिर्वृक्षानुपलब्धिः[5] । शिंशपापेक्षया च केवलप्रदेशस्य धर्मिण[5] उपलब्धिरेव शिंशपाया[6] अभावोपलब्धिरिति स्वभावहेतुपर्यवसायिव्यापारो व्यापकानुपलम्भः । तथा[7] स्थिरस्य धर्मिणो विकल्पबुद्ध्यवसितस्य क्रमिकारित्वाक्रमिकारित्वापेक्षया केवलग्रहणादेव[8] क्रमिकारित्वाक्रमिकारित्वानुपलम्भः । अर्थक्रियापेक्षया च केवलप्रतीतिरेवार्थक्रियाऽयोग-[9]प्रतीतिरिति व्यापकानुपलम्भान्तरा[6]दस्य[10] न कश्चिद्विशेषः ।

अध्यवसायापेक्षया च बाह्येऽक्षणिके वस्तुनि व्यापकाभावाद् व्याप्याभावसिद्धि-व्यवहारः । अध्यवसायश्च समनन्तरप्रत्ययबलादायाताकारविशेषयोगादगृहीतेऽपि प्रवर्तन-शक्तिर्बोद्धव्यः । ईदृशश्चाध्यवसायोऽस्मच्चित्राद्वैतसिद्धौ निर्वाहितः । स चाविसंवादी व्यवहारः परिहर्तुमशक्यः । यद् व्यापकशून्यं तद्व्याप्यशून्यमिति । एतस्यैवार्थ[50a.1]-स्यानेनापि क्रमेण प्रतिपादनात् । अयं च न्यायो यथा वस्तुभूते धर्मिणि तथाऽवस्तुभूते ऽपीति को विशेषः । तथाह्येकज्ञानसंसर्ग्यत्र[11] विकल्प्य एव । यथा च हरिणशिरसि

1. निवर्तत S. निर्दोषे सत्वस्य B.
2. प्रतीतिः S.
3. निर्दोषत्वस्य क्षणिकत्वेन S,
4. हि omitted S.
5. दृश्या S.
6. शिंशपाभावो S.
7. S adds हि ।
8. णमेव S.
9. क्रियावियोग S.
10. राददस्य T.
11. ज्ञानमात्र S.

तेनैकज्ञानसंसर्गि शृङ्गमुपलब्धं शशशिरस्यपि तेन सहैकज्ञानसंसर्गित्वसम्भावनयैव शृङ्गं निषिध्यते, तथा नीलादावपरिनिष्ठितनित्यानित्यभावे क्रमाक्रमौ स्वधर्मिणा सार्धमेकज्ञान-संसर्गिणौ [2] दृष्टौ, यदि नित्ये[1] भवतः नित्यग्राहिज्ञाने स्वधर्मिणा नित्येन सहैव गृह्येयातामिति सम्भावनया एकज्ञानसंसर्ग[3]द्वारकमेव प्रतिषिध्यते। कथं पुनरेतस्मिन्नि[4]त्यज्ञाने क्रमाक्रमयोरस्फुरणमिति यावता[5] क्रमाक्रमक्रोडीकृतमेव नित्यं विकल्पयाम इति चेत्। अतएव बाधकावतारो विपरीतारोप[6]मन्तरेण तस्य वैयर्थ्यात्। कालान्तरेऽप्ये[3]क-रूपतया[7] नित्यत्वम्। क्रमाक्रमौ च क्षणद्वये भिन्नरूपतया। ततो नित्यस्य क्रमाक्रमि-कार्यशक्तेश्च परस्परपरिहारस्थिति[8]लक्षणतया दुर्वारो विरोध इति कथं नित्ये क्रमाक्रम-योरन्तर्भावः। अनन्तर्भावाच्च शुद्धनित्यविकल्पेन दूरीकृतक्रमाक्रमसमारोपेण कथमुल्लेखः। ततश्च प्रतियोगिनि नित्येऽपि विकल्प्य[9]माने ए[4]कज्ञानसंसर्गिलक्षणप्राप्ते नित्योपलब्धिरेव नित्यविरुद्धस्यानुपलभ्यमानस्य क्रमाक्रमस्यानुपलब्धिः[10]। तत एव चार्थक्रियाशक्तेरनुप-लब्धिः। तस्माद् व्यापकविरुद्धोपलब्धितया न व्यापकानुपलम्भान्तरादस्य विशेषः।

नन्वेतदवस्तुधर्मिकोपयोगि वस्त्व[11]धिष्ठानत्वात् प्रमाणव्यवस्थाया इति चेत्। किमिदं वस्त्वधिष्ठा[5]नत्वं नाम। किं परम्परयापि वस्तुनः सकाशादागतत्वम्, अथ वस्तुनि केनचिदाकारेण व्यवहार[12]कारणत्वम्, वस्तुभूतधर्मिप्रतिबद्धत्वं वा।

यद्याद्यः पक्षस्तदा क्रमाक्रमस्यार्थक्रियायाश्च व्याप्तिग्रहणगोचरवस्तुप्रतिबद्धत्वमस्यापि[13] न क्षीणम्।[0]

न[14] द्वितीयेऽपि पक्षदोषः सम्भवति। क्षणभङ्गिवस्तु साधनोपायत्वादस्य।

न[1] चान्ति[6]मोऽपि विकल्पः कल्प्यते। तस्यैव नित्यविकल्पस्य वस्तुनो धर्मि-भूतस्य क्रमाक्रमवद् बाह्यनित्योपादानशून्यत्वे नार्थक्रियावद् बाह्यनित्योपादानशून्यत्वे[15] प्रसा-धनात्। पर्युदासवृत्त्या बुद्धिस्वभावभूताक्षणिकाकारे वस्तुभूते धर्मिणि प्रतिबद्धत्व-सम्भवात्।

अयमेव न्यायो न वक्तव्यो बन्ध्यासुतश्चैतन्याभावादित्यादौ योज्यः। एतेन यथा वृक्षाभावादि[16]रन्तर्भावयि[50b. 1]तुं शक्यते[17] न तथायमिति त्रिलोचनोऽपि निरस्तः।

न च क्रमाद्यभावस्त्रयीं दोषजातिं नातिक्रामति, अभावधर्मत्वेऽपि आश्रया-सिद्धिदोषपरिहारात्। यस्त्वनेन प्रमाणान्तराश्रित्यानामसत्त्वसिद्धौ क्रमादिविरहस्याभाव-

1. नित्येऽपि यदि S.
2. ग्राहिणा S.
3. ससागद्धा S.
4. रेतन्नित्य S.
5. यावता omitted T.
6. रीतरूपारोप S.
7. न्तरेणैक S.
8. स्थित S.
9. ऽपि कल्प्यमाने S.
10. वार्थ.......लब्धेः S.
11. कस्त्वधि S.
12. व्यवहारे T.
13. अस्य omitted S.
14, S adds च।
15. शून्यत्व[0] S.
16. दित्यादि S.
17. शक्यो T.

धर्मता[1] सिध्यतीत्युक्तम्, तद्वालस्यापि दुरभिधानम् । नित्यो हि धर्मी । असत्त्वं साध्यम् । क्रमिकार्यकारित्वाक्रमिकार्यकारित्वविरहो[2] हेतुः । अस्य चाभावधर्मत्वं ना-[2]म असत्त्वलक्षणस्वसाध्याविनाभावित्वमुच्यते । तच्च क्रमाक्रमेण सत्त्वस्य व्याप्ति-सिद्धौ सत्त्वस्य व्याप्यस्याभावेन क्रमाक्रमस्य व्यापकस्य विरहो व्याप्तः सिध्यतीत्यभाव-धर्मत्वं प्रागेव विध्योर्व्याप्तिसाधनात्[3] प्रत्यक्षादनुमानादेकस्माद्वा[4] प्रमाणान्तरात् सिद्धमिति नेतरेतराश्रयदोषः[5] ।

न च सत्तायामिवासत्तायामपि तुल्यः प्रसङ्गो [3]भिन्नन्यायत्वात् । वस्तुभूतं हि तत्र साध्यं साधनं च । तयोर्धर्म्यपि वस्त्वेव[6] युज्यते ।

वस्तुनस्तु प्रत्यक्षानुमानाभ्यामेव सिद्धिः । तयोरभावे नियमेनाश्रयासिद्धिरिति युक्तम् । असत्तासाधने त्ववस्तुधर्मो हेतुरवस्तु[7]विकल्पमात्रसिद्धे धर्मिणि नाश्रयासिद्धि-दोषेण दूषयितुं शक्यः । तथा अक्षणिकस्य क्रमयौगपद्याभ्यामर्थक्रियाविरो[4]धः सिध्य-त्येव ।

तथा विकल्पादेवाक्षणिको विरोधी सिद्धः । विकल्पोल्लिखित[8]श्चास्य स्वभावो नापर इत्यपि व्यवहर्तव्यम् । अन्यथा तदनुवादेन क्रमाक्रमादिरहितत्वादिनिषेधादिक-मुक्तम्[9] । तत्स्वरूपस्यानुल्लेखादन्यस्योल्लेखा[10]दित्यक्षणिकशशविषाणादिशब्दानुच्चारणप्रसङ्गः । अस्ति च । अतो यथा प्रमाणाभावेऽपि वि[5]कल्पसिद्धस्य[11] बन्ध्यासुतादेः सौन्दर्यादि-निषेधोऽनुरूपस्तथा विकल्पोपनीतस्यैवाक्षणिकरूपस्य तत एव[12] प्रत्यनीकाकारेण सह विरोध-व्यवस्थायां कीदृशो दोषः स्यात् । यदि चाक्षणिकानुभवाभावाद् विरोधप्रतिषेधस्तर्हि बन्ध्यापुत्राद्यनुभवादेव सौन्दर्यादिनिषेधोऽपि[13] माभूत् ।

नन्वत्रं विरोधस्यापारमार्थिक[6]त्वम् । तद्द्वारेण क्षणभङ्गसिद्धिरप्यपारमार्थिकी स्यादिति चेत् । नहि विरोधो नाम वस्त्वन्तरं किञ्चिदुभयकोटिवर्त्तपादसम्बन्धाभि-धानमिष्यते, अस्माभिरुपपद्यते वा । येनैकसम्बन्धिनो वस्तुत्वाभावेऽपारमार्थिकं[14] स्यात् । यथा त्विष्यते तथा पारमार्थिक एव । विरुद्धाभिमतयोरन्योऽन्यस्वरूपपरिहारमात्रं विरोधार्थः । स च[15] भावाभावयोः पारमार्थि[51a1. 1]क एव[16] । न भावोऽभावरूप-माविशति । नाप्यभावो भावरूपं प्रविशतीति योऽयमनयोरसंकरनियमः स एव पार-मार्थिको विरोधः । कालान्तरैकरूपतया हि नित्यत्वम् । क्रमाक्रतमौ क्षणद्वयेऽपि भिन्न-रूपतया । ततो नित्यत्वक्रमाक्रमिकार्यकारित्व[17]योर्भावाभाववद् विरोधोऽस्त्येव ।

1. S adds न ।  2. त्वाभावा T.  3. साधकात् S.
4. त्मकाद्वा S, देकाद्वा T. The letter sums to be replaced by देकस्माद्वा ।
5. त्वदोषः S.  6. वस्तुभूत एव S.  7. रवस्तुनि T.
8. ल्लेखित T.  9. मयुक्तम् S.  10. दन्यस्योल्लेखा omitted T.
11. सत्वस्य S.  12. तत् प्र S.  13. अपि omitted T.
14. दत्तपादं S.  15. पारमार्थिकः S.  16. तच्च S.
17. कमेव S.  18. कारकत्व S.

ननु नित्यत्वं[1] क्रमयौगपद्यवत्त्वं च विरुद्धौ धर्मौ विधूय नापरो विरोधो नाम, क[2]स्य वास्तवत्वमिति चेत् । न, न हि धर्मान्तरस्य सम्भवेन विरोधस्य पारमार्थिकत्वं ब्रूमः । किन्तु विरुद्धयोर्धर्मयो सद्भावे । अन्यथा विरोधनामधर्मान्तरसम्भवेऽपि यदि न विरुद्धौ धर्मौ क्व पारमार्थिकविरोधसम्भवः[2] । विरुद्धौ चेद्धर्मौ[3] तावतैव तात्त्विको विरोधव्यवहारः । किमपरेण प्रतिज्ञामात्रसिद्धेन विरोधनाम्ना वस्त्वन्त[3]-रेण ।

तत्रायं पूर्वपक्षसंक्षेपः ।

नित्यं नास्ति न वा प्रतीतिविषयस्तेनाश्रयासिद्धता
हेतोः स्वानुभवस्य च क्षतिरतः क्षिप्तः सपक्षोऽपि च ।
शून्यश्च द्वितयेन सिध्यति न वा सत्ताऽपि सत्ता यथा
नो नित्येन विरोधसिद्धिरसता[4] शक्या क्रमादेरपि ।। इति ।

अत्र सिद्धान्तसंक्षेपः ।

धर्मस्य कस्यचिदवस्तुनि मानसिद्धा
बाधाविधिव्यवहृतिः [4]किमिहास्ति नो वा ।
क्वाप्यस्ति चेत् कथमियन्ति न दूषणानि
नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः ।।

तदेवं नित्यं न क्रमिकार्यकारित्वाक्रमिकार्यकारित्वायोगीति[5] परमार्थः । ततश्च सत्तायुक्तमपि नैवेति परमार्थः[6] । ततश्च क्षणिकाक्षणिक[7]परिहारेण राश्यन्तराभावादक्षणिकान्निवर्तमानमिदं सत्त्वं क्षणिक एव विश्राम्यत्वे[8]न व्याप्तं सिध्यतीति सत्त्वात् क्षणिकत्वसिद्धिरविरोधिनी ।।

प्रकृतिः[9] सर्वधर्माणां यद्बोधान्मुक्तिरिष्यते ।
स एव तीर्थ्यनिर्माथी क्षणभङ्गः प्रसाधितः ।।[10]

इति कृतिरियं रत्नकीर्तेः ।।

1. नित्यत्वक्र S. 2. सद्भावः S.
3. च धर्मौ S. 4. रसत्ता T. 5. इति omitted S.
6. नैव परमार्थतः S. 7. अक्षणिक omitted T. 8. विश्राम्यन्ते न S.
9. प्रकृतेः S. 10. S adds the following:-

विपक्षे बाधनाद्धेतोः साध्यात्मत्वं प्रसिध्यति ।
तत्सिद्धौ द्विविधा व्याप्तिसिद्धिरत्राभिधीयते ।।
इति वैधर्म्यदृष्टान्ते व्यतिरेकरूपव्याप्त्या
क्षणभङ्गसिद्धिः समाप्ता ।।
कृतिरियं महापण्डित-
रत्नकीर्तिपादानाम् ।।

# प्रमाणान्तर्भावप्रकरणम्

[51a.5]प्रमाणद्वितयादन्यप्रमाणगणदूषणम् ।
नापूर्वमुच्यते तत्तु प्रयोगेणात्र मुद्रयते ॥

इह खलु प्रमाणमात्रे न केचिद् विप्रतिपद्यन्ते । अन्ततश्चार्वाकस्यापि सं[6]प्रतिपत्तेः । प्रमाणमात्रोच्छेदवादी च तत्तदाशंक्य प्रतिविधानादस्मद्गुरुभिरवज्ञातः ।

प्रमाणमप्रमाणं चेद् विचारावसरो हतः ।
ब्रुवता नियतं किञ्चित् साध्यं वा बाध्यमेव वा ॥
तत्रायुक्ति ब्रुवाणस्य श्लाघा सदसि कीदृशी ।
नानुमायाः परा युक्तिः किं सिद्धं तदनादरे ॥
स्वीकृता तेन सेत्यस्मात्तन्मत्या बाधनं यदि ।
अबाधनेऽस्याः स्वीकारात्तद्धिया बा[51b1]धनं कथम् ॥
साध्यं न किञ्चिदिति चेद् बाधा याऽत्रापि साध्यता ।
साऽपि नेति वचो व्यर्थं प्रश्नमात्रेऽपि किं फलम् ॥
फलं यदि शिवः क्वापि नान्यत्तत्त्वावबोधनात् ।
वाचः प्रत्यायने शक्ता नाक्षधूमादि सुन्दरं ॥
सं[वृ]तौ माननिष्ठं चेद् विचारोऽप्येष संवृतिः ।
संवृतावपि नेष्टं चेद् वदन् जेता यथा तथा ॥
संवृतिश्च विना मानं वाङ्मात्रेण न सिध्यति ।
मानतो यदि दुर्वारः प्रमाणस्य परि[2]ग्रहः ॥

आचार्योऽप्याह ।

अनिष्टेश्चेत् प्रमाणं हि सर्वेष्टीनां निबन्धनम् ।
भावाभावव्यवस्थां कः कर्तुं तेन विना प्रभुः ॥ [प्र. वा. 4.215]

इति ।

तदेवं प्रमाणमात्राप्रतिक्षेपे प्रत्यक्षं तावदवादो शङ्कनीयम्, तन्मूलत्वादपरप्रमाणोपपत्तेः । न च चार्वाकोऽप्यनुमानमनवस्थाप्य स्थातुं प्रभवति । व्यापारत्रयकरणात् ।

तच्छास्त्रे हि प्रत्यक्षेतरसमन्व्य[3]योः प्रमाणेतरविधानं लक्षणप्रणयनतो विधातव्यम् । तच्च लक्षणं प्रत्यक्षे धर्मिणि लक्ष्ये प्रामाण्ये प्रत्येतव्ये स्वभावो हेतुः । परबुद्धिप्रतिपत्तौ च कायादिव्यापारः कार्यहेतुः । परलोकप्रतिषेधे च दृश्यानुपलम्भोऽङ्गीकर्तव्यः इति कथमनुमानापलापः ।

यथाचार्यः

प्रमाणेतरसामान्यस्थितेरन्यधियो गतेः ।
[4]प्रमाणान्तरसद्भावप्रतिषेधाच्च कस्यचित् ॥

अपि च ।

अर्थस्यासम्भवेऽभावात्प्रत्यक्षेऽपि प्रमाणता ।
प्रतिबद्धस्वभावस्य तद्धेतुत्वं समं द्वयम् ॥

इत्यनुमानमपि प्रमाणम् । प्रामाण्यं च प्रमाणान्तरागृहीतनिश्चितप्रवृत्तिविषयार्थतया तत्प्रापणे शक्तिः ।

नन्वस्तु प्रापणे शक्तिः प्रामाण्यं, परमसौ नार्थादुत्पद्यते । अपि त्वर्थद[5]र्शना-दि[ ति] चेत् । किमिदमर्थदर्शनम् । अर्थस्य धर्मो दृश्यत्वम् । ज्ञानस्य धर्मो द्रष्टृत्वम् । प्रथमपक्षे नीलत्ववद् दृश्यत्वस्यापि साधारणत्वादेकगोचरार्थः सर्वगोचरः स्यात् । न हि प्रतिपुरुषमर्थानां भेदो नैरात्म्यप्रसङ्गात् । द्वितीयपक्षे तु कथमन्यस्मिन् ज्ञानस्वभावे द्रष्टृत्वे सत्यन्यस्यासम्ब[द्ध]स्यार्थस्य प्रत्याशा स्यात् । द्रष्टृत्वं दृ[6]श्यत्वमन्तरेणानुपपद्यमानं तदाक्षिपतीति. चेत् । तन् ज्ञानार्थयोरुत्पत्तिसारूप्यबलतो द्रष्टृदृश्यत्वव्यवस्था[प]न-मेतत् । अनभ्युपगमे द्रष्टृत्वं दृश्यत्वं च न सम्भवतीति किं केनाक्षिप्यताम् । भवतु वा प्रकारान्तरेणापि द्रष्टृदृश्यभावस्तथापि भेदे सत्यव्यभिचारस्तदुत्पत्तिरेव प्राप्तिनिमित्तम् । सा च प्रापणशक्तिः प्रत्यक्षानुमानयोरविशिष्टेति प्रमाणे एव ।

[52a.1] नन्वन्यदपि शाब्दोपमानादिकं प्रमाणमस्ति । तथा हि शब्दाच्चो-दनाख्यादसन्निकृष्टेऽर्थे स्वर्गादौ यज्ज्ञानमुत्पद्यते तदपि शाब्दं ज्ञानं प्रमाणमेव । प्रत्ययि-तोदितवाक्यप्रसूतं च ज्ञानं प्रमाणम् । यदाह कुमारिलः

तच्चाकर्तृकतो वाक्याद्यद्वा प्रत्ययितो[?]दितात् इति ।

तत्र यदा शब्दसमुत्थं ज्ञानं प्रमाणं तदोपादानादिबुद्धिः फलम् । यदा तु शब्दस्तदालम्बनं ज्ञानं फलमिति । नैयायिकस्य पुनः

आप्तोपदेशः शब्दः [न्या. सू १।१।७]

इति शब्दप्रमाणलक्षणसूत्रम् । तत्र शब्द इति लक्ष्यपदम् । आप्तोपदेश इति लक्षण-पदम् । अस्यायं संक्षेपार्थः । आप्तोपदिष्टः शब्दः प्रमाणमिति । आप्तश्च साक्षा-त्कृतहेयोपादेयतत्त्वो यथादृष्टस्य चार्थस्य चिख्या[पयि]षया[1] प्रयुक्त उपदेष्टा अभिधीयते । प्रमाणफलव्यवस्था च पूर्ववद् द्रष्ट[3]व्येति ।

तथा मीमांसकानामुपमानं प्रमाणम् । यदुक्तं शबरस्वामिना उपमानमपि सादृश्य-मसन्निकृष्टत्वे बुद्धिमुत्पादयति । यथा गवयदर्शनं गोः स्मरणस्येति । [शा. भा.]

---

1, चिख्यासया Ms.

अस्यायमर्थः । एकत्र दृश्यमानं सादृश्यं कर्तृ । प्रतियोग्यन्तरे दृश्यमानप्रतियोगि-सादृश्यविशिष्टतयैतत्सादृश्यविशिष्टोऽसौ इत्यसन्निकृष्टेऽर्थे[4] यां बुद्धिमुत्पादयति तदुपमानं प्रमाणमिति । यत्तदोरध्याहार इति । तस्मात् स्मरतीति स्मरणं पुरुषः । तेनायमर्थः । यथा गवये दृश्यमानं सादृश्यं गां स्मरतो मनुष्यस्य एतत्सादृश्यविशिष्टोऽसौ गौरिति बुद्धि-मुत्पादयतीति ।

न चेदमुपमानं स्मरणं कर्तव्यम् । गवयसादृश्यविशिष्टस्य गोत्वविशिष्टस्य च सादृश्य[5]स्य प्रमेयत्वात् । गोसादृश्ययो[1]र्विशेषणविशेष्यभावस्योपमानप्रमाणविषयस्य गोग्राहिणा गवयग्राहिणा वा प्रत्यक्षेण केनचिदग्रहणात् । यदाह भट्टः ॥

प्रत्यक्षेऽपि यथा देशे स्मर्यमाणे च पावके ।
विशिष्टस्यान्यतः सिद्धेरनुमानप्रमाणता[2] ॥
[श्लो. वा. उप.३६]

प्रत्यक्षेणावबुद्धे च[3] सादृश्ये गवि च स्मृते[4] ।
विशिष्टस्यान्यतोऽसिद्धेरुप[6]मानप्रमाणता ॥
[श्लो. वा. उप. ३८]

न च गवयग्रहणमन्तरेण स्मरणमस्ति । तस्मान्नोपमानं स्मरणमतः प्रमाणमिति ॥

नैयायिकादीनां तूपमानसूत्रम्,

प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् [न्या. सू. १.१.६] इति ।

अस्यायमर्थः । प्रसिद्धं साधर्म्यं यस्य तस्माद् गवयादेः साध्यस्य संज्ञासंज्ञिसम्बन्धस्य साधनं सिद्धिस्तदुपमानफलम् । समाख्यासम्बन्धप्रतिपत्तिहेतुरुपमानमित्यर्थः । [52b. 1] अयमस्य प्रपञ्चः । यः प्रतिपत्ता गां जानाति न गवयम्, आदिष्टश्च स्वामिना गच्छारण्यम् गवयमानयास्मादिति, गवयशब्दवाच्यमर्थमजानानो वनेचरमन्यं वा तज्ज्ञं पृष्टवान्, भ्रातः कीदृशो गवय इति । तेन चादिष्टं यथा गौस्तथा गवय इति । तस्य श्रुतातिदेशवाक्यस्य कस्याञ्चिदरण्यान्यामुपगतस्यातिदेशवाक्यार्थस्मरणसहकारि यद् गवयसारूप्यज्ञानं तत्प्रथ-[2]मत एवासौ गवयशब्दवाच्योऽर्थ इति प्रतिपत्तिं प्रसुवानमुपमानं प्रमाणमिति ।

तथार्थापत्तिसंज्ञं प्रमाणं मीमांसकस्य । अर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यमानो यदर्थान्तरं परिकल्पयति सार्थापत्तिः । यथा जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्यार्थस्य परिकल्पना । अस्यायमर्थः । प्रत्यक्षादिभि[3]षड्भिः प्रमाणैः प्रसिद्धो योऽर्थः स येन विना न युज्यते तस्यार्थस्य कल्पनमर्थापत्तिरिति । सा च षट्-प्रमाणपूर्विका षट्प्रकारैवेति ।

---

1. A marginal note seems to replace सादृश्य by गवय ।

2. विशिष्टविषयत्वेन नानुमानाप्रमाणता Śl. vār. 3. ऽपि Ibid. 4. स्थिते Ibid.

प्रत्यक्षानुमानादिप्रमाणपञ्चकाभावस्वभावमभावाख्यं प्रमाणम्। प्रमेयं घटाद्यभावः। नास्तीह घटादीति ज्ञानं घटाद्यभावालम्बनं फलम्। यदाह कुमारिलः।

प्रत्यक्षादेरनुत्पत्तिः [4] प्रमाणाभाव उच्यते।
सात्मनोऽपरिणामो वा विज्ञानं वान्य वस्तुनि ॥

[श्लो. वा. अभा ११]

प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥

[श्लो. वा. अभा १]

इत्येतानि षट्प्रमाणानि प्रत्यक्षादीन्यसंकीर्णस्वस्वलक्षणयोगित्वादन्योन्याप्रविष्टस्वभावानि प्रत्येतव्यानीति ॥

अत्रोच्यते। चोदनायास्तावद् बाह्येऽर्थे प्रति[5]बन्धाभावान्न प्रामाण्यम्। प्रयोगः।

यस्य यत्र प्रतिबन्धो नास्ति न तस्य तत्र प्रामाण्यम्। यथा वह्नेऽप्रतिबद्धस्य रासभस्य। अप्रतिबद्धाश्च बहिरर्थे वैदिकाः शब्दा इति व्यापकानुपलब्धिः। न चायमसिद्धो हेतुः। शब्दानां वस्तुतः प्रतिबन्धाभावात्। प्रतिबद्धस्वभावता हि प्रतिबन्धः। न च सा निर्निबन्धना। सर्वेषां सर्वत्र [6] प्रतिबद्धस्वभावताप्रसङ्गात्। निबन्धनं चास्यास्तादात्म्यतदुत्पत्तिभ्यामन्यन्नोपलभ्यते। अतत्स्वभावस्यातदुत्पत्तेश्च तत्राप्रतिबद्धस्वभावत्वात्। नहि शब्दानां बहिरर्थस्वभावतास्ति भिन्नप्रतिभासावरोधविषयत्वात्। नापि शब्दा बहिरर्थादुपजायन्ते। अर्थमन्तरेणापि पुरुषस्येच्छाप्रतिबद्धवृत्तेः शब्दस्योत्पाददर्शनात्।

ननु योग्यतयैव किञ्चित् [53a. 1] प्रतिबद्धस्वभावमुपलभ्यते। यथा चक्षुरिन्द्रियं रूपे। चक्षुः खलु व्यापार्यमाणं रूपमेवोपलम्भयति। तथैवैते वैदिकाः शब्दास्तत्सम्बन्धव्युत्पत्तिवियुक्ता अपि योग्यतामात्रेणातीन्द्रियमर्थं बोधयिष्यन्ति। तत्कथं तावा-रेणाप्रतिबन्धो येनैवं व्यापकानुपलब्धिः सिध्यतीति।

नैष दोषः। यतश्चक्षुरिन्द्रियमपि रसादिपरिहारेण रूप एव प्रका[2]शकत्वेन प्रतिनियतं तत्कार्यत्वात्। रूपं हि चक्षुरुपकरोति। न सत्तामात्रेण चक्षू रूपं प्रकाशयति। व्यवहितस्यापि रूपोपलब्धिप्रसङ्गात्। तस्माद् रूपाद् योग्यदेशसन्निहितात् तज्ज्ञानजननयोग्यतावस्थम् चक्षू रूपज्ञानमुत्पादयत्तत्कार्यमिति व्यक्तमवसीयते। अन्यथा तदुपकारानपेक्षस्य तस्यापि तत्प्रकाशननियमो [3] नोपपद्यते। न ह्यनुपकार्यत्वाविशेषे चक्षू रूपस्यैव प्रकाशकम्, न रसादेरिति घटामुपैति नियमः। अयमेव तर्हि नियमः कुतो यद् रूपेणैव चक्षुरुपकर्तव्यम्, न रसादिनेति। यदि वस्तुवशादेव रूपमुपकरोति न रसादिकम्, हन्त तर्हि यथोपकार्यत्वं प्रति नियमश्चक्षुषो रूपेण, तथा शब्दानामपि स्वाभाविक एवास्तु ब[4]हिरर्थप्रत्यायननियम इति।

अत्रोच्यते । न चक्षुषः स्वाभाविको रूपोपकार्यतानियमः । कस्यचिद् वस्तुनः स्वाभाविकत्वानुपपत्तेः । तथा हि स्वाभाविकत्वं वस्तुधर्मस्यानुजानानः प्रष्टव्यः । किं स्वाभाविक इति स्वतो भवति । आहोस्वित् परतः । अथाहेतुतः । यदि स्वतो भवति, तदसङ्गतं स्वात्मनि क्रियाविरोधात् । अथाहेतुतः तदयुक्तम् । [5] अहेतोर्देशादिनियमायोगात् । तस्मान्न स्वाभाविको रूपोपकार्यताप्रतिनियमश्चक्षुषः । किंनिबन्धनस्तर्हि स्वहेतुप्रतिबद्ध इति ब्रूमः । चक्षुः खलु स्वहेतुना जन्यमानं तादृशमेव जनितम्, यद्रूपोपकर्तव्यमेव भवति । रूपमपि तादृशमेव स्वहेतुना जनितं यत्तदुपकारकस्वभावम् ।

शब्दानामपि स स्वभावः स्वहेतुप्रतिबद्धो [6]येनैते बाह्यार्थाव्यभिचारिण इति चेत् । न शक्यमेवमभिधातुम् । नित्यत्वाभ्युपगमाद्वेदवाक्यानाम् । अथ नित्यत्वमभ्युपगम्यायमाक्षेपः परिहर्तुमिष्यते, तदपि दुष्करम् । दोषान्तरप्रसङ्गात् । यदि स्वहेतुनैव ते नियमार्थोपदर्शनशक्तिमन्तो जनिताः, तदाऽव्युत्पन्नसमयस्यापि स्वार्थमवबोधयेयुः । यथा चक्षुः स्वहेतो रूपप्रकाशकमुत्पन्नं सत् प्रकाशय[53b. 1]त्येव रूपमसङ्केतविदोऽपि, न च शब्दादुच्चरितात् प्रागप्रतीतसमयस्यापि विशेषावगमः समस्ति । तस्मान्न स्वहेतुप्रतिबद्धश्चक्षुरादेरिव शब्दानामर्थप्रतिपादननियम इति निश्चयः ।

अथ स्वहेतुभिरेवायमीदृशस्तेषां स्वभावो दत्तो येन ते संकेतविशेषसहाया एव कमप्यर्थमवबोधयन्ति । न तर्हि सङ्केतपरावृत्तौ पदार्थान्तरवृत्तयो भवेयुः । यदि ह्ययमग्निहोत्रशब्दः संकेतापेक्षो यागविशेषप्रतिपादकः, कथं सङ्केतान्यत्वेनार्थान्तरं प्रतिपादयति । नहि क्षित्याद्यपेक्षेण बीजेन स्वहेतोरङ्कुरजननस्वभावेनोत्पन्नेन रासभः शक्यो जनयितुम्, तथा शब्दोऽपि यदर्थप्रतिपादननियतस्तमेव प्रकाशयेत् ।

अथ तत्तत्सङ्केतापेक्षस्तदर्थप्रत्यायनयोग्य एवायं जात इत्यु[3]च्यते । तदपि न प्रस्तुतोपयोगि । न ह्येवमस्य प्रामाण्यमवतिष्ठते । यदा हि सङ्केतेनापुरुषार्थप्रतिपादनमपि सम्भाव्यत एव, तदा न शक्यमुपकल्पयितुं किमयमभिमतस्यैवार्थस्य द्योतको न वेति । तर्हि वाच्यवाचकलक्षणः शब्दार्थयोः सम्बन्धो भविष्यति । तथा चाह,

वाच्यवाचकसम्बन्धाः सन्ति यद्यपि वास्तवाः ।
सङ्केतैरनभि[4]व्यक्ता न तेऽर्थव्यक्तिहेतवः ॥

इति चेत् । ननु तस्य वास्तवत्वेऽसङ्केतविदोऽप्यर्थप्रतिपत्तिर्भवेदित्युक्तम्, सङ्केतापेक्षायां चार्थान्तरे न प्रवर्ततेत्याद्यभिहितम् । अतः पूर्वमेवायं प्रत्याख्यातो वाच्यवाचकलक्षणः सम्बन्धः । तस्मान्न बहिरर्थे प्रतिबन्धः शब्दानामिति निर्णयः ।

ततश्च नासिद्धो हेतुः ।

नापि विरुद्धः । विपर्ययव्याप्त्यभावा[5]त् । तदभावश्च सपक्षे वृत्त्युपदर्शनात् । नहि विरुद्धस्य साधर्म्यवति धर्मिणि सद्भावो युक्तः । साध्यविपर्ययस्य तत्राभावात् । न च व्यापकमन्तरेण व्याप्यस्य सम्भवः । तत्प्रच्युतिप्रसङ्गात् ।

नाप्यनैकान्तिको हेतुः, विपर्यये बाधकप्रमाणसम्भवात् । प्रामाण्यप्रतिषेधे हि साध्ये प्रामाण्यमेव विपक्षः । न च तस्मिन् प्रतिबन्धाभावलक्ष[6]णो हेतुरस्ति । स्वविरुद्धेन प्रतिबन्धेन व्याप्तत्वात् । न खल्वयं प्रादेशिकः प्रमाणशब्दो ज्ञानेषु निर्निबन्धन एव, सर्वज्ञानेषु प्रामाण्यव्यपदेशप्रसङ्गात् । निबन्धनं च स्वविषयप्रतिबन्धाबन्यन्नोपपद्यते । तस्मात् प्रमाणस्य प्रमाणव्यपदेशविषयत्वं स्वविषयप्रतिबन्धेन व्याप्तम् । अतः प्रमाणे धर्मिणि विपक्षे प्रामाण्यस्य विरुद्धव्याप्तस्योपलम्भेन विपक्षे व्यव[54a. 1]-च्छेदसिद्धेर्नानैकान्तिको हेतुः ।

न चान्यो दोषः सम्भवी । तस्मान्निरस्ताशेषदोषेण हेतुना यत् प्रसिद्धं तदुपादेयमेव सताम्[इति]पण्डितश्रीजितारिपादैरेव वेदाप्रामाण्ये दर्शितम् ।

एवं च वैदिकशब्दानां प्रामाण्ये निरस्ते तदुक्तं ज्ञानमप्यप्रमाणमेव ॥

आप्तप्रणीतस्य पुनर्वचनस्यार्थाव्यभिचारे तज्जन्मनो ज्ञानस्याव्यभिचारसम्भवेऽपि न प्रामाण्यमुपगन्तुं शक्यते । परचित्तवृत्ती[2]नामशक्यनिश्चयत्वेनाप्तत्वापरिज्ञानात् । वचनस्यापि तत्प्रणीतत्वाप्रतिपत्तेः । प्रयोगश्चात्र,

यद् येन रूपेण न निश्चितं न तत् तेन रूपेण व्यवह्रियते । यथा रथ्यापुरुषः सर्वज्ञत्वेन । न प्रतीयते चाभिमतपुरुष आप्तत्वेनेति व्यापकानुपलब्धिः ।

नायमसिद्धः । आप्ताभिमतस्य तथात्वानिश्चयात् । तथा हि परचित्तवृत्तयोऽतीन्द्रियत्वान्न प्रत्यक्षसमधिगम्या इति कायवाग्व्यवहारतोऽनुमातव्याः । तौ च कायवाग्व्यवहारौ बुद्धिपूर्वमन्यथापि कर्तुं शक्येते । ततस्तत्प्रतिबद्धत्वेनानिश्चयात्कथं कायवाग्व्यवहारतो विशिष्टपरचित्तवृत्त्यनुमानम् ।

नापि विरुद्धः । सपक्षे सद्भावसम्भवात् ।

नाप्यनैकान्तिकः । प्रामाणिकतद्रूपव्यवहर्तव्यत्वनिश्चितत्वयोर्व्याप्यव्यापकभूतयोर्विभि[4]न्नयोर्वृक्षत्वशिंशपात्वयोरिव प्रत्यक्षानुपलम्भाभ्यां सर्वोपसंहारेण व्याप्तेः सिद्धत्वात् । अतः साधनाद् दोषत्रयरहिताद् साध्यं सिद्धमवाच्यमेव । तदेवमाप्तत्वस्य दुर्बोधत्वेन तत्प्रणीतत्वानिश्चयादेकप्रहारनिहतमाप्तवचसः प्रामाण्यम् ।

अतो यदेतस्य प्रामाण्यप्रसिद्ध्यर्थं वाचस्पतिप्रभृतीनां वल्गितं तदप्राप्ता[5]वसरमेव । एवं प्रत्ययोदितमपि भट्टाभिमतं शाब्दं प्रामाण्यं व्यस्तमिति बोद्धव्यम् । तस्मात् स्थितमेतत् । न शाब्दं बहिरर्थे प्रमाणमस्तीति । बुद्ध्याकारे तु तत्कार्यप्रसूतत्वात्तदनुमानमेवेति ॥

मीमांसकोक्तं तावदुपमानं मानमेव न भवति, निर्विषयत्वादस्य । इहापि प्रयोगः ।

यस्य न विषयवत्त्वं न तस्य प्रामाण्यम् । यथा केशोण्डु[6]कज्ञानस्य । न सिद्धं च विषयवत्त्वमुपमानज्ञानस्येति व्यापकानुपलम्भः । नायमसिद्धो हेतुः, निर्विषय-

---

1. न sums to be crossed.

त्वादुपमानस्य । तथा हि सादृश्यविशिष्टः पिण्डः पिण्डविशिष्टं वा सादृश्यमुपमानस्य विषयो वर्ण्यते । न सदृशवस्तुव्यतिरिक्तं सादृश्यं व्यवस्थापयितुं शक्यते । प्रमाणेनाप्रतीतत्वात् ।

ननु सादृश्यं वस्तु दुर्वारमेव । यदाह

सादृश्यस्य च[1] वस्तुत्वं न[54b.1]शक्यमपबाधितुम् ।
भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत् ॥

[श्लो. वा. उप. १८]

इति ।

अत्रोच्यते । यदि सदृशातिरिक्तं सादृश्यं वस्तु दृश्यं स्यात्, तदा दृश्यानुपलम्भग्रस्तमेव । शास्त्रानाहितसंस्कारेणापि केनचित्तस्यादर्शनात् । तस्य चास्तित्वे सर्वं सर्वत्रास्तीत्यप्रवृत्तिनिवृत्तिकं जगदापद्येत । अथादृश्यं तत्सादृश्यमुपेयते, तथापि तत्र प्रसिद्धलिङ्गाभावादसिद्धमेव । सिद्धन च तेन विषय[2]वत्तोपमानस्य सिध्येत् । सादृश्यप्रत्ययस्तु स्वहेतोस्तथोत्पन्नेन सदृशवस्तुनापि क्रियमाणो घटत एव इति न सादृश्यमुत्थापयितुं प्रभवति । उपमानप्रमाणबलादेव सादृश्यसिद्धिरिति चेत् । न, प्रमाणान्तरसिद्धयोरेव सादृश्यपिण्डयोर्विशेषणविशेष्यभावस्योपमानविषयत्वात् । कथं सादृश्यमात्रस्योपमानात् सि[3]द्धिः । ततश्च सादृश्यस्यासिद्धेर्न तद्विशिष्टः पिण्डः पिण्डविशिष्टं वा सादृश्यमुपमानस्य विषयः । तदेवमुपमानस्य निर्विषयत्वं सिद्धमिति नासिद्धो हेतुः ।

नापि विरुद्धः, सपक्षे भावात् ।

न चानैकान्तिकः । तथा हि प्रामाण्याभावे साध्ये प्रामाण्यमेव विपक्षः । तच्च विषयवत्तया व्याप्तं निर्निमित्तत्वे सर्वज्ञानप्रामाण्यप्रसङ्गात् । त [4]दयं विरुद्धव्याप्तोपलब्ध्या विपक्षान्निवर्तमानो विषयवत्त्वाभावलक्षणो हेतुः प्रामाण्याभावलक्षण एव विश्राम्यतीति व्याप्तिसिद्धिः । अतो नोपमानं प्रमाणमिति ।

नैयायिकपरिकल्पितोपमाननिराकरणार्थमप्ययमेव प्रयोगो द्रष्टव्यः, तस्यापि निर्विषयत्वात् । तथा हि समाख्यासम्बन्धस्तस्य विषयो वर्ण्यते । स च परमा[5]र्थतो नास्ति । स हि सम्बन्धः सम्बन्धिभ्यां भिन्नोऽभिन्नो वा । यदि भिन्नस्तदा तयोरिति कुतः । न च सम्बन्धान्तरादिति वक्तव्यम् । तदपि कथं तेषामिति चिन्तायामनवस्थाप्रसङ्गः । न च यथा प्रदीपः प्रकाशान्तरमन्तरेण प्रकाशते तथा सम्बन्धोऽपि सम्बन्धान्तरमन्तरेण सम्बद्धो भविष्यतीति वक्तुमुचितम् । प्रमाणसिद्धे हि वस्तुरूपेऽयमस्य स्वभाव इति चिन्त्यते । यथा प्रदीपस्यैव । सम्बन्धस्तु न प्रमाणप्रतीतः । तत्क एवं जानात्वयमस्य स्वभाव इति, यद्वा नास्त्येवायमिति । अयमनयोः सम्बन्धः सम्बद्धावेताविति तु बुद्धिः स्वहेतुबलात् सम्बद्धवस्तुद्वयादपि सम्भाव्यमाना न सम्बन्धमाक्षेप्तुं प्रभवति ।

1. स्यापि श्लो. वा.

तस्मान्न भिन्नसम्बन्धसिद्धिः। अथाभिन्नः। तदा सम्बन्धिनावेव केवलाविति न समाख्यासम्बन्धो ना[55a.1]म, यः कश्चिदुपमानस्य विषयः स्यात्।

ननु सम्बन्धबुद्धिजनकत्वं सम्बन्धपदार्थाद्भिन्नमभिन्नं वा। भेदे च स एव सम्बन्धः। नाम्नि परं विवादः। अथाभिन्नः। तदा यथा सम्बद्धपदार्थस्य स्वभावः सर्वपदार्थसाधारणस्तथा तदपि रूपं तदव्यतिभिन्नं सर्वपदार्थसाधारणमिति स पदार्थोऽभिमतपदार्थेनेव परैरपि पदार्थैः सह सम्बद्धः स्यात्।

नन्वेवं तस्माद्भिन्नं तत्सम्बन्धबुद्धिजनकत्वं सम्बद्ध[2]पदार्थादेष्टव्यमिति चेत्। नन्वेतदाशङ्क्य राजकुलपादैः परिहृतमेव। तथा हि

सम्बद्धं स्वयमेव चेन्ननु यथा तं तस्य सम्बन्धिनं
प्रत्यात्मा जगतीमपि प्रति तथा तत्केन योगोऽस्य न।
सम्बन्धे परतोऽपि तुल्यमखिलं तेनैव चेत् संयमो
हेतुः किं न नियामकः स च कथं योगः क्वचिन्नापरे॥

इति। तस्मात् सम्बन्धाभावात् पूर्वोक्तेन न्यायेन [3] सारूप्याभावार्थसिद्धं नैयायिकस्यापि निर्विषयमुपमानं प्रमाणमतोऽनन्तरेणैव व्यापकानुपलम्भेन निराकृतम्॥

अर्थापत्तिरपि। यदेतत् सामान्यलक्षणं प्रत्यक्षादिप्रतीतो योऽर्थः स येन विना नोपपद्यते तस्यार्थस्य परिकल्पनमर्थापत्तिरित्यत्र विचार्यते। यस्यार्थस्य दर्शनाद् योऽर्थः परिकल्प्यते तयोर्यदि प्रतिबन्धोऽस्ति[4]तदार्थापत्तिरनुमानमेव। अर्थापत्तिरिति नामान्तरकरणे नास्माकं काचिद्विप्रतिपत्तिः। तथा हि प्रमाणपरिदृष्टोऽर्थः केनचिद्विना नोपपद्यत इति कुतो लभ्यते। यदि परिदृश्यमानपरिकल्प्यमानयोः कश्चित् सम्बन्धः स्यात्। अन्यथा तेन विना नोपपद्यत इत्यह्नीकादन्यो न ब्रूयात्। घटपटवत्। स च सम्बन्धः क्वचित् पूर्वमवश्यं प्रत्य[5]क्षानुपलम्भतः, क्वचिददृश्यत्वेऽपि विपर्ययबाधकप्रमाणबलाद्वा निश्चेतव्यः। अन्यथा तेन विनाऽनुपपत्तिज्ञानस्यैवानुपपत्तेः। सति चैवम्, एकं सम्बन्धिनं दृष्ट्वा यत्रस्थेन विना तत्रस्थं नोपपद्यते, तस्य द्वितीयस्य सम्बन्धिनः कल्पनमनुमानमेव। तत्र स्वभावप्रतिबन्धे स्वभावहेतुजैव साऽर्थापत्तिः। तदुत्पत्तिप्रतिबन्धे कार्यलिङ्गजैव। तदुक्तम्।

अन्यथानुपपन्नत्वमन्वयव्यतिरेकिण्यर्थे भवति यत्, तस्मान्नार्थापत्तिः प्रमाणान्तरमिति।

तस्मात् परिदृश्यमानपरिकल्प्यमानयोः सति प्रतिबन्धे नार्थापत्तिः प्रमाणान्तरमिति। अथ तयोर्न प्रतिबन्धः, तदार्थापत्तिः प्रमाणमेव न भवतीति मन्तव्यम्। साक्षात् पारम्पर्येण च सम्बन्धाभावात्। यस्य यत्र प्रतिबन्धो नास्ति न तस्य तत्र प्रामाण्यमित्यादिर्वेदनिराक[55b1]रणार्थं यः पूर्वमुपन्यस्तः स एवास्या अपि प्रामाण्यनिराकरणाय द्रष्टव्यः। सामान्येनैवार्थापत्तौ निराकृतायां प्रत्यक्षादिपूर्वकत्वलक्षणस्तत्प्रपञ्चो निरस्तो भवत्येवेति तदर्थं न प्रबन्धेऽभिधीयते, गवि निराकृते शाबलेयनिराकृतिवत्। तस्मान्नार्थापत्तिः प्रमाणान्तरमिति।

तथा अभावप्रमाणस्यापि प्रामाण्यं नोपपद्यते, तस्यापि निर्विषयत्वात् । ततश्च मीमांसकोपव[3]र्णितोपमाननिराकरणार्थमुपन्यस्तो यो विषयवस्त्वाभावलक्षणोऽनुपलम्भः स एवास्यापि निरासार्थमुपन्यसितव्यः । ननु चात्रासिद्धो हेतुः । तथा हि यदि घटाभावो वास्तवः प्रमेयभूतो न स्यात् तदा नास्तीह घट इति प्रत्ययः कथमुत्पद्यत इति चेत् । केवलप्रदेशग्राहिप्रत्यक्षादिति ब्रूमः । ननु यदि कैवल्यं प्रदेशस्वरूपं तर्हि सघटेऽपि प्रदेशे विद्यत इति तत्रापि तस्य प्रत्ययस्य सद्भावप्रसङ्गः । प्रथातिरिक्तः मुखान्तरेणाभाव एवाभ्युपगतो भवतीति चेत्, न । कैवल्यं तद्विविक्तत्वमसङ्कीर्णत्वमित्यादिभिः पदैः प्रदेशस्य घटं प्रत्यनापन्नाधारभावस्य स्वहेतुत उत्पन्नस्य घटप्रदेशादन्य एवास्माभिरभिधीयते । स एव चाभावप्रत्ययं जनयतीति किमपरेणाभावेन कर्तव्यम् ।

[4] ननु घटं प्रत्यनापन्नाधारभावस्य प्रदेशस्येति घटाभावयुक्तस्य प्रदेशस्येत्युक्तं भवतीति चेत् । तर्हि घटाभावोऽपि घटं प्रत्यनापन्नाधारभावः किमभावान्तरेण स्वरूपेणैव वा । प्रथमपक्षेऽनवस्था । अथ तदभावरूपत्वादभावान्तरेणैव घटाभावो घटं प्रत्यनापन्नाधारभावः । यद्येवमसहायः प्रदेशविशेषोऽपि पर्युदा[5]सवृत्त्या घटाभावरूपत्वादभावं विनैव घटं प्रत्यनापन्नाधारभावो युक्त इति किमकाण्डमाहोपुरुषिकया मिथ्याप्रलापेनाबोधविकलवं शिष्यपुद्गलमाकुलयसि । तस्माद् भूतलातिरिक्तस्याभावस्यासिद्धत्वान्नायं विषयवत्ताऽभावलक्षणो हेतुरसिद्धः । प्रमाणपञ्चकाभावादेव तु प्रमेयाभावसिद्धिप्रत्याशापि न युज्यते । विप्रतिपत्तिविषयत्वादनेनैव प्रमेयाभावसिद्धेरयोगात् ।

विरुद्धानैकान्तिकत्वे च पूर्वमेव हेतोः परिहृते । ततः सिद्धमभावप्रमाणाभिमतस्याप्रामाण्यमिति ।

अथवाऽभावप्रामाण्यस्वरूपमेव निरूप्यताम् । कः पुनः प्रमाणाभावास्माऽभिमतो भवताम्, किं प्रसज्यवृत्त्या प्रमाणानुत्पत्तिमात्रम् । अथवा पर्युदासवृत्त्या भावान्तरम् । वस्त्वन्तरमपि जडरूपं ज्ञानरूपं वा । ज्ञानरू[56a1]पमपि ज्ञानमात्रकमेकज्ञानसंसर्गिवस्तुज्ञानं वेति षड् विकल्पाः ।

तत्र न तावन्निर्वृत्तिरूपोऽभावो युज्यते । स खलु निखिलशक्तिविकलतया न किञ्चित् । यच्च न किञ्चित् तत्कथमभावं परिच्छिन्द्यात्, तद्विषयं वा ज्ञानं जनयेत् । प्रतीतं वा तत्कथमिति सर्वमन्धकारनर्तनम् । यदाहुः ।

नह्यभावः कस्यचित् प्रतिपत्तिः प्रतिपत्तिहेतुर्वा तस्यापि कथं प्रतिपत्तिरिति ।

[2] नापि वस्त्वन्तरतापक्षे जडरूपोऽभावः सङ्गच्छते । तस्याभावलक्षणप्रमेयपरिच्छेदाभावात् । परिच्छेदस्य ज्ञानधर्मत्वात् । नापि ज्ञानमात्रस्वभावोऽभावो वक्तव्यः । देशकालस्वभावविप्रकृष्टस्यापि ततोऽभावप्रसङ्गात् । तदपेक्षयापि ज्ञानमात्रत्वात् तस्य । अथैकज्ञानसंसर्गिवस्तुज्ञानस्वभावोऽनुमन्यते तदाऽस्तमभावप्र[3]माणप्रत्याशया, प्रत्यक्ष-

विरोधकस्यैवाभावव्यवस्थापकत्वात् । तस्य चास्माभिर्दृश्यानुपलम्भाख्यसाधनत्वेन स्वीकृतत्वात् । अतो न काचिद् विप्रतिपत्तिर्नाम । तस्मादभावप्रमाणस्वरूपमपि निरूप्यमाणं विशीर्यत एव यदन्यस्य लक्षणमुक्तम्

प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते ।

[श्लो० वा० प्रमा०]

इत्यादि तदपि याचितकमण्डनम् । तस्मात् स्थितमेतत्, प्रमाणस्य प्रमाणे एव ॥

प्रमाणान्तर्भावप्रकरणं समाप्तम् ॥

# व्याप्तिनिर्णयः

[56a.4]इह वह्निं विना धूमादेरभावस्तस्य व्याप्तिस्तदुत्पत्तिलक्षणा । सा च विशिष्टान्वयव्यतिरेकग्रहणप्रवणविशिष्टप्रत्यक्षानुपलम्भसाधनेति न्यायः । अत्र च भट्टप्रभृतयो विप्रतिपद्यन्ते । तथा हि तेऽग्निमति प्रदेशे धूमस्य [5]भूयोदर्शनं तद्वियुक्ते च तथैवादर्शनमित्यन्वयव्यतिरेकित्वं कल्पयाम्बभूवुः ।

ननु भूयसामपि प्रवृत्ते दर्शनादर्शने घटकुलटादावुपलब्धो व्यभिचार इति चेत् । किमेतावता तत्राप्यनुमानमस्तु । तद्वद्वा धूमादावपि मा भूत् । प्रथमपक्षस्तावद् व्यभिचारादेव निरस्तः । द्वितीयो[पि] व्यभिचारादेव । नह्यन्यस्य व्यभिचारे धूमस्य किञ्चित् । [6] तस्मादग्निधूमयोरव्यभिचारस्यासम्भवे शतमपि तदुपपत्तयः तत्प्रसाधकविशिष्टप्रत्यक्षानुपलम्भा वा नानुमानोपयोगिनः । सम्भवे वा किं तदुत्पत्त्या तदुपयोगिना विशिष्टप्रत्यक्षानुपलम्भेन, दर्शनादर्शनाभ्यामेवाव्यभिचारसिद्धेः ।

तथा च काशिकाकारः[1] । प्राचीनानेकदर्शनजनितसंस्कारसहायेन चरमेण चेतसा धूमस्याग्निनियतत्वं[56b.1]गृह्यत इति ।

त्रिलोचनस्त्वाह ।

प्रत्यक्षानुपलम्भयोर्विशेषविषयत्वात् कथं ताभ्यां सामान्ययोः सम्बन्धप्रतिपत्तिः । अथानग्निव्यावृत्तेनाधूमव्यावृत्तस्य सम्बन्धः प्रतीयत एवेति । ननु सोऽपि कस्य प्रमाणस्य विषयः । न तावत्प्रत्यक्षस्य, स्वलक्षणविषयत्वात्तस्य । नाप्यनुमानस्य, तस्यापि तत्पूर्वकत्वात् । न च व्यावृत्त्योः कश्चित्सम्बन्धः । अथ प्रत्यक्षपृष्ठभावी विकल्पो दृष्टे भेदेऽभे[2]दमध्यवस्यति, तदेव सामान्यम् । एवमपि विकल्पानां न वस्त्वेव विषयः । अपि तु ग्राह्याकारः । स च न वस्तु । वस्तु तु तेषां परोक्षमेवेति, कथं तेनापि सम्बन्धग्रहः । अस्माकं तु भूयोदर्शनसहायेन मनसा तज्जातीयानां सम्बन्धो गृहीतो भवति । अतो धूमो नाग्निं व्यभिचरति । तदव्यभिचारे धूम उपाधिविरहितं स्वभावमतिक्रामेदिति हेतो[3]र्विपक्षशङ्कानिवर्तकं प्रमाणमुपलब्धिलक्षणप्राप्तोपाधिविरहेऽनुपलम्भाख्यं प्रत्यक्षमेव । ततः सिद्धः स्वाभाविकः सम्बन्धः ।

वाचस्पतेस्तु प्रपञ्चः ।[2]

तथा हि धूमादीनां वह्न्यादिभिः स्वाभाविकः सम्बन्धः । न तु वह्न्यादीनां धूमादिभिः । ते हि विनापि धूमादिभिरुपलभ्यन्ते । वह्न्यादयस्तु[3] यदा[4]र्द्रेन्धनसम्बन्धमनु-

1. काशिका, pt. III, p. 16.
2. ता. टी. p. 138.
3. वह्न्यादयस्तु omitted ता. टी. ।
4. यदा त्वा ता. टी. ।

भवन्ति तदा धूमादिभिः सम्बध्यन्ते । वह्न्यादीनां तु स्फुटमार्द्रेन्धनाद्युपाधिकृतः सम्बन्धो न तु स्वाभाविकः । ततोऽनियतः । स्वाभाविकस्तु धूमादीनां वह्न्या[3]दिभिः सम्बन्धः, तदुपाधेरनुपलभ्यमानत्वात् । क्वचिद् व्यभिचारस्यादर्शनात् । अनुपलभ्यमानस्यापि कल्प्यमानुपपत्तेः[1] । न चादृश्यमानोऽपि दर्शनानर्हतया साधकबाधकप्रमाणाभावेन सन्दिह्यमान उपाधिः सम्बन्धस्य स्वाभाविकत्वं प्रतिबध्नातीति युक्तम् ।

अवश्यं शङ्कया भाव्यं नियामकमपश्यताम्

इति तु दत्तावकाशा लौ[5]किकमर्यादाति[2]क्रमेण शङ्कापिशाची लब्धप्रसरा न क्वचिन्नास्तीति नायं क्वचित् प्रवर्तेत । सर्वत्रैव कस्यचिदनर्थस्य कथञ्चिच्छङ्कास्पदत्वात् । अनर्थशङ्कायाश्च प्रेक्षावतां निवृत्त्यङ्गत्वात् । अन्ततः स्निग्धान्नपानोपयोगेऽपि मरणदर्शनात् । तस्मात् प्रामाणिकलोकयात्रामनुपालयता यथादर्शनमेव शङ्कनीयम् । नत्वदृष्टपू[6]र्वमपि । विशेषस्मृत्यपेक्ष एव हि संशयो नास्मृतेर्भवति । न च स्मृतिरननुभूतचरे भवितुमर्हति । तदुक्तं मीमांसावार्तिककृता ।

नाशङ्का निःप्रमाणिका इति ।

तस्मादुपाधिं प्रयत्नेनान्विष्यन्तोऽनुपलभमाना नास्तीत्यवगम्य स्वाभाविकत्वं सम्बन्धस्य निश्चिनुमः ।

स्यादेतत् । अन्यस्यान्येन सहाकारणेन चेत् स्वाभाविकः सम्बन्धो भवेत्, सर्वं सर्वेण[57a. 1]स्वभावतः सम्बध्येत[4] । सर्वं सर्वस्माद् गम्येत । अथान्यस्य चेदन्यत् कार्यं कस्मात् सर्वं सर्वस्य न भवति, अन्यत्वाविशेषात् । ततश्च स एवातिप्रसङ्गः । उच्यते न भावस्वभावाः पर्यनुयोज्याः । तस्मादन्यत्वाविशेषेऽपि किञ्चिदेव कारणं कार्यञ्च किञ्चिदिति[5] । नन्वेवं स्वभावानामनुयोगो भिन्नानाम[6]कार्यकारणभूतानामपि स्वभावप्रतिबन्धे तुल्य एव । तस्माद् यत्किञ्चिदेतदपि[7] । केन[8] पुनः प्रमाणे[2]नैष स्वाभाविक सम्बन्धो गृह्यते । प्रत्यक्षं सम्बन्धिषु[9] प्रत्यक्षेण । तथा हि । अभिजातमणिभेदतत्त्ववद् भूयोदर्शनजनितसंस्कारसहायमिन्द्रियमेव धूमादीनां वह्न्यादिभिः स्वाभाविकसम्बन्धग्राहीति युक्तमुत्पश्यामः[10] । एवं मानान्तरविदितसम्बन्धेषु मानान्तराण्येव[11] यथास्वं भूयोदर्शनसहायानि स्वाभाविकसम्बन्धग्रहणे प्रमाणान्युन्नेतव्यानि । स्वभावतश्च प्रतिबद्धा हेतवः स्वसाध्येन यदि साध्यमन्तरेण भवेयुः, स्वभावादेव प्रच्यवेरन्निति तर्कसहाया[12] निरस्तसाध्यव्यतिरेकवृत्ति[13]सन्देहा यत्र दृष्टास्तत्र स्वसाध्यमुपस्थापयन्त्येवेति[14] ॥

1. ता.टी. adds अतो नियतः सम्बन्धोऽनुमानाङ्ग० । 2. काशा खाल्वय प्रमाणमर्यादा ता.टी. ।
3. सहकारेण ता. टी., सहाभावकारणेन Ms. 4. ता. टी. adds तथा च ।
5. किञ्चित् कार्यमिति Ms. 6. भिन्नानां० omitted Ms.
7. अपि omitted ता. टी. । 8. कः for केन ता.टी. । 9. प्रत्यक्षसम्बन्धेषु Ms.
10. उत्पश्यामः omitted ता. टी. । 11. मानान्तरेण स्वभावतश्च Ms.
12. तर्कसहायैरनिरस्त ता. टी. । 13. वृत्ति omitted Ms. 14. अथवेति Ms.

अत्रोच्यते । इह खलु भेदे तदुत्पत्तिरेव व्याप्तिः । न चासावन्यो वा स्वत एवाविनाभावलक्षणः स्वाभाविकः सम्बन्धो भूयोदर्शनमात्रतः सिध्यति । तथा हि, किं यत्र भूयोदर्शनप्रवृत्तिस्तत्र नियतत्वव्यवस्था । यत्र वा[4]नियतत्वमस्ति तत्रैव भूयोदर्शनप्रवृत्तिः । प्रथमपक्षे घटादपि कुलटा, पार्थिवत्वादपि लोहलेख्यत्वं सिध्येत् । भूयोदर्शनसम्भवेऽपि नियतत्वसम्भवात् ।

व्यभिचारदर्शनान्नैवमिति चेत् । कस्य पुनर्व्यभिचारदर्शनम् । यस्य कस्यचित्, शास्त्रकारस्य, प्रतिपत्तुर्वा । प्रथमपक्षे प्रतिपत्तुः किमायातं यतो नानुमानमयं कुर्यात् । अ[5]न्यथाऽन्यस्य तद्विषयप्रत्यक्षीकारेणैव सोऽपि कृतार्थ इति किमवश्यमनुमानमन्वेषते । न चाप्तवचनादव्यभिचारदर्शनादनुमानम् । आप्तस्य निश्चेतुमशक्यत्वादित्यन्यत्र प्रसाधनात् । शास्त्रकारं च पृष्ट्वा दृष्टसम्बन्धोऽपि धूमादग्निमनुमास्यत इत्यलौकिकम् । प्रतिपत्तुस्तु नावश्यं सन्नपि व्यभिचारो गोचरीभवति । नहि यत्र व्यभिचा[6]रस्तत्रैव तावति काले देशे वावश्यं प्रतीतिमवतरति । अप्रतीयमानश्च नास्त्येवेति न नियमः । सत्यपि व्यभिचारे दर्शनसामग्र्यभावात् तस्यादर्शनात् । अतिचिरकालव्यवधानेऽपि दर्शनात् । ब्राह्मण्यादिव्यभिचारवत् । घटपार्थिवादौ प्रतिपत्तैव प्रवृत्तः । तदैव क्रमेण वा व्यभिचारं पश्येदिति चेत् । यदि तावदसौ कथञ्चित् प्रवर्तते, प्रवृत्तोऽपि वा सामग्र्यभावा[57b. 1]द्व्यभिचारं न पश्येत् । वज्रं वा लोहेन व्यापारयेत् । व्यक्तं तस्य तावत् तदप्यनुमानमापन्नमिति महत्पाण्डित्यम् । तस्माद् यदि अव्यभिचारादर्शनादनुमानं तदाऽदृष्टव्यभिचारस्य प्रतिपत्तुर्घटपार्थिवत्वादप्यस्ति । तथा अदर्शनमात्रेण व्यभिचाराभावो न सिध्यति । योग्यानुपलब्धेरेव सर्वत्राभावसाधनेऽधिकारात् । ततो बहुलं सहचारमात्रेण न व्यभिचारी न वाऽव्यभिचारी निश्चित[2] इति शङ्कावकाशः ।

यद्येवमदृष्टव्यभिचारादपि धूमादनुमानं मा भूत् । न, ईदृशस्य शङ्कावकाशस्य सर्वत्र तदुत्पत्तिरहिते सम्भवादिति । अथ कदाचित् प्रतिपत्ता प्रवृत्तो व्यभिचारं पश्यति । न तर्हि यत्र भूयोदर्शनम्, तत्र नियतत्वस्थितिः । तत्र कुतो धूमे प्रतिबन्धसिद्धिः । भूयोदर्शनस्यान्यत्र नियतत्वोपस्थापकत्वक्षतौ मलिनपौरुष[3]त्वेन सर्वत्रानाश्वासात् ।

यद्येवं द्विचन्द्रादौ चक्षुरादिप्रत्यक्षं मलिनपौरुषमुपलब्धमिति घटादिकमपि नोपस्थापयेदिति चेत् । न, इन्द्रियविषयकार्यं हि प्रत्यक्षम् । न द्विचन्द्रादिज्ञानमीदृशमर्थकार्यत्वाभावात् । ततो भिन्नलक्षणस्य प्रत्यक्षाभावसत्त्वेऽपि घटज्ञानं प्रत्यक्षमेव । न चैवं धूमादौ पार्थिवत्वादौ च व्याप्तिग्राहकस्य भूयो[4]दर्शनस्य लक्षणभेदो यदेकत्रानाश्वासः स्यात् ।

एत एवार्थकार्यत्वाकार्यत्वे लक्षणभेद इति चेत् । न, घटादिज्ञानस्य ह्यर्थकार्यत्वविवादे प्रमाणान्तरतोऽर्थक्रियालाभतो वा निश्चयः, न प्रतिज्ञामात्रेण ।

ननु यदि धूमस्यापेक्षणीयमर्थान्तरमुपाधिः स्यात् कथं धूम इत्येव पावकसत्तानियम इति चेत् । नन्विद[58b1]मेव चिन्त्यते किं धूमे सत्यवश्यमग्निः सम्भवी न वेति । कदाचिदर्थान्तरमुपाधिमपेक्ष्य धूमोऽपि स्यान्नाग्निरिति किमत्र निष्टङ्कं कारणम् । तस्मात् पावकपराधीनोदयो धूमः परिनिष्ठितः कथं तदभावे भवं स्वीकुर्वीतेत्येव साधु ।

अथ व्यक्तौ जातौ वा वह्निव्यभिचारो न दृष्टः कथं तत्र शङ्क्यत इति चेत् । तत् किं स्थाणुव्यक्तौ जातौ वा पुरुषत्वं दृष्टं येन स्थाणौ शङ्क्यते ।

अन्य[2]त्रोर्ध्वतालिङ्गिते दृष्टमिति चेत् । इहाप्यन्यत्र भूयः सहचारिणि पार्थिवत्वादौ दृष्ट एव व्यभिचारः । यत्रैव तु यत् संशय्यते तत्रैव तस्य दर्शनमपेक्ष्यत इत्यलौकिकम् । यदि धूमव्यक्तौ व्यभिचारो दृष्टस्तदा धूमसामान्यं व्यक्तौ बहिर्भूतमेव, कथं संशयः । अथ जातौ दृष्टस्तदापि व्यभिचारनिश्चय एव, कथं संशयः । अतो धूमजातावदृश्यमानोऽपि व्यभिचार उपाधिर्वा दर्शनायोग्यतया निषेद्धुमशक्य इति संशयो दुर्वारप्रसरः । स चेदानीमुपाधेर्व्यभिचारस्य वा संशयः स्वाभाविकत्वसंशयस्वभावः स्वाभाविकत्वनिश्चयं तावदवश्यं प्रतिबध्नाति । तस्मात् स्वाभाविकत्वनिश्चयप्रतिबन्ध एवार्थतः । निश्चयमन्तरेण गमक[4]स्य[1] स्वयमकिञ्चित्करत्वात् । तदेवमुपाध्यनुपलब्धिर्व्यभिचारस्यानुपलब्धिर्वाऽनैकान्तिकी न तयोरभावं साधयति, यतः सम्बन्धस्य स्वाभाविकत्वसिद्धिः स्यात् । असिद्धा चेयमुपाध्यनुपलब्धिः । यथा वह्नौ नेन्धनेन विना धूमेन सम्बध्यते तथा धूमोऽपि न तेन विनाऽग्निना सम्बध्यत इति समानमुपाधित्वमिन्धनस्योभयत्र ।

अथ [5] सिद्धस्याग्नेरिन्धनसाहित्येन धूमलाभ इत्युपाधिव्यवस्था । प्रसिद्धस्य तु धूमस्य तन्निमित्तात्मलाभतयाऽव्यभिचारात् स्वाभाविकः सम्बन्ध इति व्यवस्थाप्यत इति चेत् । एवमपि सैव तदुत्पत्तिरायाता । सैव स्वाभाविकः सम्बन्धः । न पुनः प्रतिभासिद्धः सहचारमात्रात्मकः । किञ्च स्वाभाविकत्वादव्यभिचारः सर्वत्र, सर्वत्राव्य[6]भिचाराच्च स्वाभाविकत्वमितीतरेतराश्रयत्वमनिवार्यम् । यस्य तु सकृत्तदुत्पत्तिप्रतीतिरेव सर्वत्राव्यभिचारप्रतीतिस्तस्य नायं प्रसङ्गः ।

यद्येवं ममापि भूयोदर्शनादव्यभिचारसिद्धिरिति चेत् । न भूय इत्यपरिनिष्ठितवारसंख्यत्वात् कियता दर्शनेन लक्षणानुसारी निर्वृतिमासादयेत् । अस्माकं तु प्रत्यक्षानुपलम्भौ परिगणितसंख्यावेव । यदाहुः ।

[59a1]प्रागदृष्टौ क्रमात् पश्यन् वेत्ति हेतुफलस्थितिम्[2] । इति ।

1. गमकास्य Ms. 2. स्थितिरिति Ms.

Cf. यथाऽस्माकं

प्रागदृष्टौक्रमात्पश्यन् वेत्ति हेतुफलस्थितिम् ।

दृष्टौ वा क्रमशोऽपश्यन्नन्यथात्वेन वा स्थितिरिति

व्याप्तिचर्चा ।

यत्त्वनुपलभ्यमानस्यापि कल्पनानुपपत्तेरिति विलपितम्, तद्बालस्याप्य-साम्प्रतम् । अनुपलभ्यमानेऽर्थे च कल्पनावकाशात् । नहि दृश्यमानो घटः कल्पित उच्यते । न च सन्दिह्यमान उपाधिः सम्बन्धस्य स्वाभाविकत्वं प्रतिबध्नातीति युक्तम् । साधकबाधकाभाव एव संशयस्य न्या[2]यप्राप्तत्वात् । अतएव न सर्वत्र शङ्कापिशाचा-वकाशः । तत्कथं नायं प्रवर्तेत ।

प्रमाणविषयेऽपि शङ्का कर्तुं शक्यत इति चेत् । न । स्वीकृतप्रमाणस्य हि निश्चयफलत्वात् प्रमाणस्याविप्रतिपन्नप्रमाणविषये निश्चयस्वीकारनान्तरीयक एव तत्स्वी-कारः । न च शङ्कैत्येव न प्रवृत्तिः । अर्थसंशयेनापि प्रवृत्तेरनिवार्यत्वात् । हिन्नया[3]न्नपानोपयोगवत् । तदुपयोगे कदाचिन्मरणदर्शनेऽपि कोटिशो जीवित-दर्शनात् । न च प्रामाणिकलोकयात्राक्षतिः । प्रामाणिकैरेव प्रमाणाभावे संशयस्य विहितत्वात् । यथादर्शनमाशङ्कनीयमित्यादावपि सिद्धसाधनम् । अन्यत्र दृष्टस्यैवोपाधे-र्व्यभिचारस्य वा शङ्कितत्वात् । किं च बाधकादर्शनेऽपि साधकाभावादपि शङ्का [4]स्यादेव ।

यदपि स्यादेतदिति वल्गितं तदपि निःसारम् । प्रमाणसिद्धे हि रूपे स्वभावाव-लम्बनम् । न तु स्वभावावलम्बनेनैव वस्तुस्वरूपव्यवस्था । तदपि नियतविषयान्वय-व्यतिरेकग्राहकप्रत्यक्षानुपलम्भप्रमाणसिद्धे हेतुफलभावे स्वभाववादस्तत् किमायातं स्वाभा-विकसम्बन्धे । यत्र तदुत्पत्तिसामग्रीं हृदयेन दूरीकृ[5]त्यान्यतः सहचरितद्वयाद् विशेषेण प्रतीतौ प्रत्युपाय एव दवीयान् । तत्सामग्र्यपेक्षणे च तदुत्पत्तिरेव सा । किमाहो-पुरुषिकया नामान्तरकरणेन । केन पुनः प्रमाणेन एष स्वाभाविकः सम्बन्धो गृह्यत इत्यादिस्तद्ग्रहणप्रकारः पूर्वमेव निराकृतः । तथा स्वाभाविकत्वासिद्धौ स्वभावतश्च प्रतिबद्धा हेतव इत्याद्युपसं[6]हारोपि मनोराज्यमात्रम् । तस्मादर्थान्तरे गम्ये कार्य-हेतुस्तद्भावसिद्धिश्च प्रत्यक्षानुपलम्भाविति स्थितम् । तदेवं स्वाभाविकवादेन हृदयानु-लेपनमशुचिनेवपरिहार्यं दूरत इति ।।

व्याप्तिनिर्णयः समाप्तो रत्नकीर्तिपादानाम् ।।

# स्थिरसिद्धिदूषणम्

[60b. 1] नमस्तारायै ॥

यद्योगादन्धवद्विश्वं संसारे भ्रमविष्यते ।
सा कृपावशगैः पापा स्थिरसिद्धिरपास्यते ॥

इह परे सकलपदार्थस्थैर्यप्रसाधनार्थं प्रत्यक्षमनुमानमर्थापत्तिं [च] प्रमाणान्याचक्षते । तथा हि । स एवायं घटस्फटिकादिरिति प्रत्यभिज्ञाख्यं प्रत्यक्षमुदीयमानं स्थैर्यमुत्थापयति । न चैवमप्रमाणमभिधातव्यम् । अप्रामाण्यं हि भवदप्रामाण्यकारणोपपत्त्या वा भवेत्, प्रामा[2]ण्यलक्षणविरहाद् वा । यद्याद्यः पक्षः । किमप्रामाण्यकारणम्, मिथ्यात्वमज्ञानं संशयो वा । न तावदत्र मिथ्यात्वम् । [1]मिथ्यात्वं हि तद्विषये बाधकप्रत्ययाद् वा हेतूक्तदोषतो वा सम्भाव्येत । न तावद् बाधगन्धोऽपि सम्भवति । देशकालनरान्तरेष्वप्यसम्भवात् । न चानवगतापि बाधा कदाचिदपि भविष्यतीति शङ्का युक्तिमती । निर्बीजशङ्कानुपपत्तेः ।

अवश्यं शङ्कया भाव्यं[3]नियामकमपश्यताम् ।

इति बलावकाशा संशयपिशाची लब्धप्रसरा न क्वचिन्नास्तीति नायं क्वचित्प्रवर्तेत । अन्ततः स्निग्धान्नपानोपयोगेऽपि मरणदर्शनेन सर्वत्र शङ्काऽनिवृत्तेः । तस्मात् प्रामाणिकलोकयात्रामनुपालयता यथादर्शनमेव शङ्कनीयं नादृष्टपूर्वमपि । यदुक्तं कारिकायां

नाशङ्का निष्प्रमाणिका ।

इति । बृहट्टीकायामपि

उत्प्रेक्षेत हि यो मोहादजातमपि बाधकम् ।
स सर्वव्यवहारेषु संशयात्मा क्षयं व्रजेत् ॥

इति ।

क्षणभङ्गसाधनं बाधकमस्येति चेत् । न । अनुमानस्य परम्परयापि प्रत्यक्षपूर्वकत्वात् प्रत्यक्षं प्रधानम् । प्राधान्याच्चानुमानस्य बाधकम् । न त्वनुमानमस्य । प्रत्यक्षान्तरं तु बाधकं भवति । यथा सर्पादिप्रत्ययस्य रज्ज्वादिप्रत्यक्षम् । तच्चात्र न सम्भवति ।

ननु प्रत्यक्षेऽपि बाधके कस्मान्न भवति परस्परप्रतिबन्धेन द्वयोरप्यप्रत्यक्षता । न, अर्थक्रियासमर्थवस्तुविषयाविषयत्वेन समानत्वाभावादेकस्य प्रत्यक्षाभासत्वादिति न

1. मिथ्यात्वं हि added, separate hand.

सद्विषयत्वं बाधकप्रत्ययान्मिथ्यात्वम् । नापि हेतूक्तदोषतः । देशकालनरान्तरेऽर्थविसंवादात् । नाप्यज्ञानमप्रामाण्यकारणमत्रास्ति । प्रत्यभिज्ञानसंवेदनसम्भवा[61]त् । न च संशयः । नहि तदेवेदं स्थाणुर्वा नवेति स्फटिकादिषु भवति मतिः । किंतु तदेवेदं स्फटिकादिकमिति निरस्ता विभ्रमाशङ्का । तन्नाप्रामाण्यकारणोपपत्त्या प्रत्यभिज्ञानस्याप्रामाण्यम् । नापि लक्षणक्षयात् । यदेव हि उत्पन्नमसन्दिग्धमदुष्टकारणजन्यं देशकालनरान्तरेष्वबाधितं च तदेव प्रमाणमिति नः सिद्धान्तः । तदुक्तम् ।

तस्माद् दृढं यदुत्पन्नं न विसंवाद[61a. 1]मृच्छति ।
ज्ञानान्तरेण विज्ञानं तत्प्रमाणं प्रतीयताम् ॥

तथा बृहट्टीकायाम्

तत्रापूर्वार्थविज्ञानं निश्चितं बाधवर्जितम् ।
अदुष्टकारणारब्धं प्रमाणं लोकसम्मतम् ॥

इति । एतच्च लक्षणमुक्तन्यायेन प्रत्यभिज्ञानेऽपि सम्भवतीति प्रमाणमेवेदम् । नन्विदमेकमेव न भवति कारणभेदात्, विषयभेदात्, स्वभावविरोधाच्च । तथा हि । स इति संस्कारकार्यम् । अयमिति चेन्द्रियकार्यम् । न च कारणभेदेऽ[2]पि कार्यभेदो विश्ववैचित्र्याहेतुकत्वप्रसङ्गात् । तथा सत्यपि स्फटिकः स्फटिक इति व्यपदेशाभेदे पूर्वदेशकालसम्बन्धापरदेशकालसम्बन्धाभ्यां विरुद्धधर्माभ्यां योगात् स्फटिकः पूर्वापरकालयोर्भिद्यत इति विषयभेदो वक्तव्यः । तथा स इति परोक्षम् । अयमिति साक्षात्कारः । न चानयोः स्वभावविरुद्धयोर्दहनतुहिनयोरिव शक्या [3]शक्रेणाप्येकता आपादयितुम् । त्रैलोक्यस्यैक्यप्रसङ्गात् । न चास्य प्रामाण्यम्, विकल्पत्वेन वस्तुनिर्भासित्वात्, स्मार्तादविशेषाच्च । तस्मात् प्रत्यभिज्ञा एकत्वं स्थापयति भावानामिति मनोरथमात्रम् ।

अत्रोच्यते । एकमेवेदं प्रत्यभिज्ञानं समाख्यातम्, यद्यपीन्द्रियं केवलमसमर्थम्, यद्यपि संस्कारमात्रम्, संस्कारसध्रीचीनं तु इन्द्रियं भावयिष्यति प्रत्यभि[4]ज्ञाम् । तद्भावाभावानुविधानात् प्रत्यभिज्ञाभावाभावयोः । नहि नाजीजनद् बीजमात्रमङ्कुरमिति मृदादिसहितमपि न जनयति । अथ भवतु देशकालयोस्तत्संसर्गयोर्वा परस्परनानात्वम् । न तदवच्छिन्नस्य पद्मरागस्य । तस्य ताभ्यां तत्संसर्गाभ्यां चान्यत्वात् ।

तदवच्छेदके तत्संसर्गयोः कुतस्तदीयत्वमिति चेत् । स्वभावादेवेति संसर्गपरीक्षायां [5]निपुणतरमुपपादयिष्यते । न च स्वभावविरोधः, अनुमानस्याप्यनेकत्वप्रसङ्गात् । तदपि हि प्रत्यक्षमप्रत्यक्षं च । अविकल्पो विकल्पश्च । असमारोपः समारोपश्च । स्वानुभवावस्थापिताभेदस्य स्वरूपतद्ग्राह्यभेदापेक्षया प्रत्यक्षपरोक्षत्वाविरोध इति चेत् । न, इहापि साम्यात् । न खल्वेतदपि विज्ञानं तत्तेदन्ताधिकरणमेकमभ्यासनु[6]रक्तं स्फटिकं गोचरयदभिन्नं नानुभूयते नावसीयते वा । एकत्वेऽपि च वस्तुनस्तदनुरञ्जकतत्तेदन्ताभेदापेक्षया प्रत्यक्षतापरोक्षते न विरोत्स्येते, सहसम्भवात् । विकल्पकत्वस्य च

अभ्रान्तसिद्धत्वात् । न च स इति पूर्वदेशकालसंसर्गोऽयमिति च सन्निहितदेशकाल-संसर्गम् एकस्य विरुध्यते । यतो युक्तं यत्पद्मरागस्य स्वरूपे परिच्छिद्यमाने तदन्यो व्यवच्छिद्यत इति[61b.1]तदव्यवच्छेदे तत्स्वरूपापरिच्छेदात् स्वप्रकृतिव्यवच्छेद-स्वभावत्वात् पद्मरागभावस्य तदनवच्छेदे तत्परिच्छेदानुपपत्तेः ।

कस्मात् पुनस्तदन्ये पुष्परागादयो व्यवच्छिद्यन्ते । तदभावाविनाभावादिति चेत्, स एव कुतः । प्रत्यक्षेण कदाचिदपि पुष्परागपद्मरागयोस्तादात्म्यानुपलम्भादिति चेत् । यत्र तर्हि ततस्तादात्म्यप्रतीतिः, न तत्र तदविनाभावः । समस्ति च सोऽयं पद्मराग इति[2]देशकालावस्थानुगतमेकं पद्मरागमवभासयन्ती साक्षात्कारवती प्रतीतिः । न विकल्परूपतयास्या अप्रामाण्यम् । अभिलापसंसर्गप्रतिभासत्वप्रामाण्ययोरविरोधात् । न चेदं स्मार्तम् । अदेशकालावस्थावतोऽयं देशकालावस्थानुगतत्वेनाधिकविषयादिति ।

अथ केशकुशकदलीस्तम्भादौ सत्यपि भेदे प्रत्यभिज्ञानमुत्पन्नमिति चेत् । उत्पद्यतां को दोषः । किमनेन प्रतिपादितं भवति । किं प्रत्यभिज्ञायाः साधारणानैकान्तिकत्वम्, अथ शब्दसाम्यादुभयोरप्यप्रामाण्यम्, उत संशयापादनामात्रम् ।

प्रथमः पक्षोऽनभ्युपगमादेव निरस्तः । न हीयमनुमानत्वेनोपन्यस्ता । अनुमानत्वेऽप्यबाधितत्वादिति विशेषणे न दोष इति प्रतिपादयिष्यामः ।

नापि द्वितीयः पक्षः । दृष्टान्तमात्रतः साध्य[4]सिद्धेरयोगात् । केशोण्डुकादिविषयस्य चक्षुर्विज्ञानस्याप्यप्रामाण्ये घटादिप्रत्यक्षस्याप्रामाण्यप्रसङ्गात् ।

संशयमात्रं तु व्यवहारोच्छेदकत्वान्नाश्रयणीयमेवेति प्रतिपादितमिति न तृतीयोऽपि पक्षः ।

किञ्च केशादौ यदि प्रत्यभिज्ञा व्यभिचारिणी, कार्यकारणप्रतीतिः किं न व्यभिचारिणी । या व्यभिचारिणी सा कार्यकारणप्रतीतिरेव न भव[5]तीति चेत् । यद्येवं या विसंवादिनी सा प्रत्यभिज्ञैव न भवति तदाभासत्वादिति समानम् । प्रत्यभिज्ञानस्य च सति प्रामाण्येऽनुमानादिष्वनन्तर्भावे प्रत्यक्षतैव । संस्कारसहायेन्द्रियान्वयव्यतिरेकानुविधायित्वाच्च । सत्संप्रयोगे सतीन्द्रियाणां भावाच्च । तदियं प्रत्यभिज्ञाऽनेकदेशकालावस्थासम्बद्धमेकं स्फटिकादिकं गोचरयन्ती स्थैर्यं व्यवस्थापयति । [6] तथानुमानतोऽपि स्थिरतासिद्धिः । प्रयोगः ।

विवादाध्यासितः स एवायं स्फटिक इत्यादि प्रत्यभिज्ञाप्रत्ययो यथार्थः । अबाधितप्रत्ययत्वात् । यो यो बाधितप्रत्ययः स सर्वो यथार्थ उपलब्धः । यथा प्रत्ययः । अबाधितश्चायम् । तस्माद्यथेति । अबाधितत्वञ्च परोद्भावितानैकान्तिकत्वसाधक-बाधकोद्धारप्रसिद्धमेवम् ।

अथापरः प्रयोगः ।

विवादाध्यासिता भावाः पूर्वापर[62a1]कालयोरेकस्वभावाः अबाधितप्रत्यभिज्ञया प्रत्यभिज्ञायमानत्वात् । यद्यदबाधितप्रत्यभिज्ञया प्रत्यभिज्ञायते तत्सर्वमभिन्नम्,

यथा यस्त्वया दृष्टो नीलोऽर्थः स एव मया दृष्ट इति नीलोऽर्थः प्रत्यभिज्ञायते । तथा चैते भावाः । तस्मात्तथेति । पूर्वं प्रत्ययस्य धर्मिता । अधुना भावानामिति विशेषः ।

किं च सहेतुकत्वाद्विनाशस्य स्थैर्यं सिद्धम् । प्रयोगः ।

विवादास्पदीभूता भावा यथास्वं विनाशहेतुसन्निधेः प्राङ्न विनाशिनः । सहेतुकविनाशत्वात् । यद्यद्धेतुकं तत्तदसन्निधौ न भवति । यथावह्न्याद्यभावे धूमादिः । सहेतुकविनाशाश्चामी भावाः । तस्मात्तथेति ।

सहेतुकविनाशत्वं च घटस्याग्निधूमयोरिव प्रत्यक्षानुपलम्भतो मुद्गरविनाशयोरपि कार्यकारणभावसिद्धौ सिद्धम् । न च विनाशहेतोरसामर्थ्यवैयर्थ्याभिधानमुचितम् । अ[3]ङ्कुरादिहेतोरपि तथात्वप्रसङ्गात् । शक्यं हि वक्तुमर्थस्याभविष्णुतायामसमर्थो[1] जन्महेतुः । भविष्णुतायां व्यर्थं इति । अपि च अक्षणिकाः सन्तः । कारणवत्त्वात् । यत् कारणवत्तदक्षणिकम् । यथा भावविनाशः । कारणवन्तश्चेमे सन्तः । तस्मादक्षणिका इति ।

कारणवत्त्वस्य साध्यविपर्यये वृत्तिशङ्काविनाशस्य सहेतुकत्वमेव निवर्तयतीति प्रसिद्धव्या[4]प्तिकात्कारणवत्त्वादक्षणिकत्वसिद्धिरिति ।

तथा शङ्करः स्थिरसिद्धौ प्राह ।

नोत्पत्त्यनन्तरविनाशी भावः प्रमेयत्वात् । वस्तुव्यावृत्तिवदिति ।

अविद्यमानविपक्षत्वादन्वय्येव हेतुः । प्रमेयत्वस्य क्षणिकत्वेन विरोधाभावात् सन्दिग्धव्यतिरेकित्वमिति चेत् । न खलु क्षणिकत्वे कस्यचित्प्रमेयत्वं सिध्यति । क्षणस्थितिधर्मणः प्रमाणकालेऽस्थाता[5]त् । अतीतस्य च प्रमेयत्वेऽतिप्रसङ्गादिति ।

एवमेव प्रयोगमुपस्तुवन् त्रिलोचनोऽप्याह ।

अक्षणिकाः सर्वभावाः । प्रमेयत्वात् । यत् प्रमीयते तदक्षणिकम् । यथा भावविनाशः । प्रमेयाश्च सर्वभावाः । तस्मादक्षणिका इति ।

असिद्धो दृष्टान्तधर्मीति चेत् । न स्वकारणकलापादुत्पत्तिमतो भावस्यान्तरेण निवृत्तिप्रसवं सर्वदावस्थानप्रसङ्गा[6]त् । तदैव भावोऽस्ति न पूर्वं न पश्चादित्यपि शक्यः क्षणिकपर्यायत्वेनेष्यमाणः क्षणादूर्ध्वं सत्त्वाविच्छेदोपजननमन्तरेण नार्थवान् देवैरपि शक्यः परिकल्पयितुम् । विनाशकालापेक्षया हि क्षणोऽल्पीयान् कालः । तेन सोऽस्यास्तीति क्षणिको वक्तव्यः । इतरथा जन्मविनाशयोरेकस्मिन् काले भवतोः तुल्यहेतुकत्वेनैकत्वप्रसङ्गः । एकत्वे तु द्वयोरेकतरः प्रहा[62b1]तव्यः ।

1. अर्थस्यावविष्णुतायामसर्थो Ms.

तत्र जन्मप्रहाणे भावा निःस्वभावाः प्रसज्येरन् । निवृत्तिपरित्यागे च जन्मिनो भावा नित्या इति दुर्निवारः प्रसङ्गः । तत् सिद्धो दृष्टान्तः ।

ननु प्रमेयत्वक्षणिकत्वयो[र]विरोधोऽसिद्धः । सन्दिग्धविपक्षव्यावृत्तिकं प्रमेयत्वमिति चेत् । नैतदस्ति । यस्मादर्थं कञ्चित् प्रापयत् प्रत्यक्षं तेन प्रत्यासन्नत्वात्प्रापयति । प्रत्यासत्तिश्च तदुत्पत्तिरेवावकल्पते । न तादात्म्यम् । साकारनिराकार[2]वादयोरप्रकृतत्वात् । अन्यत्र निराकृतत्वाच्च । सा च नियतवस्तुप्रति[1]भासाक्षिप्ता कार्यकारणभावलक्षणा प्रत्यासत्तिस्तुल्यकालं प्रमाणप्रमेययोरनुपपन्ना, सव्येतरविषाणयोरिव । ततः प्रमाणमर्थसत्तां बोध्यसत्तदधीनोत्पादतया बोधयति । कारणभावमात्रानुबन्धित्वाच्च तस्य पूर्वकालसत्तया भवितव्यम् । अतः पूर्वकालसत्त्वेन [3] व्याप्तं प्रमेयत्वम् । पूर्वकालसत्वं च क्षणिकत्वेऽनुपपन्नमिति व्यापकानुपलब्ध्या विपक्षात् क्षणिकत्वाद् व्यावर्तमानं प्रमेयत्वमक्षणिकत्वेन व्याप्यत इति असन्दिग्धो व्यतिरेकः । तदेवमनुमानप्रमाणसिद्धोऽक्षणिक इति ॥

एवमर्थापत्तिरप्यसाधिका । तथा हि कार्यकारणभावग्रहणं क्रमयौगपद्यग्रहणस्मरणं अभिलाषः स्वयंनि[4]हितप्रत्यनुमार्गणं दृष्टार्थकुतूहलविरमणं कर्मफलसम्बन्धः संशयपूर्वकनिर्णयः बन्धमोक्षः मोक्षप्रयत्नः शुभोदर्के[2] कर्मणि प्रवृत्तिः प्रत्यभिज्ञा कार्यकारणभावः उपादानोपादेयभावप्रभृतयः स्थिरसत्तामन्तरेणानुपपद्यमानाः स्थैर्यं साधयन्ति । प्रतिक्षणं भेदे सत्यनुभवितुर्विनष्टत्वेऽन्यस्य कार्यकारणभावग्रहणाद्य[5]नुपपत्तेरिति कथं क्षणभङ्गशङ्काऽपि ॥

अत्राभिधीयते । अप्रमाणमेवायं प्रत्यभिज्ञाख्यो विकल्पो मिथ्यात्वं च सद्विषयत्वबाधकप्रत्ययात् । नन्वस्य बाधकं प्रत्यक्षमसम्भवि । अनुमानं चासमर्थमावेदितमिति चेत् । नन्वस्य प्रत्यभिज्ञानस्य स्वार्थाविनाभावदार्ढ्यं प्रत्यक्षसहस्रेणापि किम् । संवादशैथिल्ये तु बाधकप्रत्यक्षवदनुमानमपि [6] प्राप्तावकाशम् । प्रमाणस्यैव सिद्धिबाधयोरधिकारात् । तथा हि मायाकारः शिरसि निमज्जितं गोलकमास्येन निःसारयतीति प्रत्यभिज्ञा शिरसि छिद्रप्रसङ्गसङ्गतनानुमानेन बाध्यमाना प्रतीतैव । बाध्यमाना न प्रत्यभिज्ञेति प्रस्तुतेऽप्यस्तु । यथाऽवनताकाशप्रतिभासः सर्वसंप्रतिपत्तावपि बाध्य एव तद्वदेकताग्रहः सर्वसंप्रतिपत्तावपि बाध्योऽस्तु । तस्मादस्याः प्र[63a1]त्यक्षताकीर्तनं याचितकमण्डनमात्रमत्राणम् । कथमतः स्थैर्यस्थितिरस्तु । ततश्चानुमानत्वमप्यस्या ध्वस्तम् । उक्तक्रमेण बाधितत्वविशेषणविरुद्धबाध्यमानतायाः प्रसाधनादिति विशेषणासिद्धो हेतुः । यदपि क्षणभङ्गसाधकं बाधकं नोच्यते अस्यास्तदापीयमप्रमाणमेव । लूनपुनर्जातकेशादौ व्यभिचारोपलम्भात् ।

ननूक्तं याऽव्यभिचारिणी सा न प्रत्यभिज्ञेत्यादि, यु[2]क्तमेतत् । यदि कार्यकारणभावप्रतीतिबललक्षणभेदः प्रतिपादयितुं शक्येत । यथाह्यन्वयव्यतिरेकग्रहण-

1. प्रिता Ms. 2. शुभादिके Ms.

सम्भवस्थलात् उपलम्भानुपपत्तौ निश्चयः कार्यकारणभावप्रतीतेरन्यथानुपपत्तेरिन्द्रियजत्वे-लक्षणभेदः, तथा यदि प्रत्यभिज्ञानेऽपि लक्षणभेदो दर्शितः स्यात्, दर्शयितुं वा शक्यो व्यभिचाराव्यभिचारोपयोगी, तदा [3]भवतु प्रत्यभिज्ञानतदाभासयोर्विवेकः । न त्वेवमस्ति । सर्वत्रात्यन्तसदृशे वस्तुनि पृथग्जनप्रत्यभिज्ञाया एकरसत्वात् ।

संवादित्वासंवादित्वे लक्षणभेद इति चेत् । न । अलिङ्गस्य हि संवादो नाम प्रमाणान्तरसङ्गतिरर्थक्रियाप्राप्तिर्वा । तत्र न तावदाद्यः पक्षः । स एवायमिति स्वतन्त्रैकाध्यवसायमात्रावष्टम्भस्य प्रमा[4]णान्तरस्याप्यभावात्

नापि द्वितीयः पक्षः सङ्गच्छते । नहि सिद्धा काचिदर्थक्रिया । भिन्नेनापि तत्समानशक्तिना तादृगर्थक्रियायाः करणाविरोधात् । तथा हि यथैको घटो वारि धारयतीति तत्कालभाविनोऽप्यन्यस्य देशान्तरवर्तिनो न वारिधारणवारणम्, तथा द्वितीयादिक्षणोऽप्यन्यो यदि वा[5]रि धारयति, कीदृशो दोषः स्यात् । विसदृशक्रियायां तु चिन्तैव नास्ति । तत्कथं प्रत्यभिज्ञानस्य संवादसम्भवः ।

ननु यद्येकं प्रत्यभिज्ञानं विसंवादि दृष्टमिति सर्वमेव प्रत्यभिज्ञानं विसंवादि शंक्यते, तदैकमिन्द्रियज्ञानं केशोण्डुकद्विचन्द्रादौ विसंवाद्युपलब्धमिति घटादिष्वपि सर्वमेव प्रत्यक्षं विसंवादि सम्भाव्यताम् । इन्द्रियजन्यत्वस्यैक[6]लक्षणस्य सर्वत्र सम्भवादिति चेत् । न, तत्रापि लक्षणभेदस्य सद्भावात् । तथा हि बहिरर्थसन्निहितेन्द्रियार्थ-कार्यतया साक्षादर्थाकारानुकारित्वं प्रत्यक्षत्वम् । तच्चाभ्यासविशेषासादितपाटवस्य प्रत्यक्षेण निश्चीयते । क्वचित्त्वर्थक्रियाप्राप्तिज्ञानादिति प्रत्यक्षत्वमनवद्यमेव । द्विचन्द्रादौ त्वर्थविनाकृतेन तिमिरादिविप्लुतचक्षुर्मात्रेण तज्ज्ञानं जनितमिति प्रत्यक्षा[63b. 1]-भासमेव । द्विचन्द्राद्यर्थाभावस्तु देशकालनरान्तरे[1] द्विचन्द्रादेरर्थस्य बाधितत्वात् इति प्रत्यक्षाभासपरिहारेऽपि प्रत्यक्षेषु क आश्वासविरोधः ।

प्रत्यभिज्ञानेऽपि सर्वमिदमस्तीति न युक्तम् ।

यथा हि पूर्वं पावकादौ पाकादिक्रियाप्रतिबद्धा सिद्धा पश्चादनुभूयमाना दहन-ज्ञानस्य संवादमावेदयति । अन्यथा बाह्यार्थोच्छेदापत्तिरीहं जगज्जायते । न तथा प्रथ[2]मचरमकालयोरेकीभावप्रतिबद्धा काचिदर्थक्रिया उपलब्धिगोचरा । पूर्वापरकालयो-रेकत्वमन्तरेण वा प्रवृत्त्याविकलतियैनैकतावग्रहोऽपि संवादी स्यात् । तद्विषयमनुमान-बाधितत्वाद् व्यभिचारशङ्काकलङ्कितत्वाच्च न प्रत्यक्षमनुमानं चेति । कथमतः स्थैर्य-सिद्धिरनुमानप्रतिहतिर्वा ।

यत् . पुनर्वाचस्पतिरुवाच ।

संस्कारेन्द्रिययोर्मिलितयोरेव प्रत्यभिज्ञानं प्रति कारणत्वमिति, तदयुक्तम् । भिन्नसामग्रीप्रसूतत्वादनयोर्ज्ञानयोः । तथा हि निमीलिते चक्षुषि स इत्यत्रेन्द्रियविना-

1, कालनन्तरान्तर Ms,

कृतस्यैव संस्कारस्य सामर्थ्यमुपलब्धम् । प्रथमदर्शने त्वयमित्यत्र संस्काररहितस्यैवेन्द्रियस्य सामर्थ्यं दृष्टम् । तस्मात् सामग्रीद्वयप्रतिबद्धं ज्ञानद्वयमिदमवधारितम् । कथमुभा[4]भ्यां मिलिताभ्यामेव प्रत्यभिज्ञानमुत्पादितमित्युच्यते । बीजक्षित्याद्योस्तु पृथक् सामर्थ्यं न दृष्टमित्येकैव सामग्रीत्यङ्कुरोऽप्येक एवास्तु । तथा पूर्वदेशकालापरदेशकालसम्बन्धित्वं तत्तदाकारोपलभ्यमानत्वात् पद्मरागस्याभेद इत्यप्यसङ्गतम् । विरुद्धयोर्धर्मयोः पद्मरागस्यान्यत्वेऽपि विरुद्धधर्मयोगात् पद्मरागस्य भेदः कथ[5]मपह्नूयते । त्रैलोक्यैकत्वप्रसङ्गस्य दुर्वारत्वात् । नहि धर्मधर्मिणोरन्यत्वेऽपि ब्राह्मणत्वचण्डालत्वे एकाधारे भवितुमर्हत इति पद्मरागस्य भेदो दुरतिक्रमः । तथा च न स्वभावविरोधोऽनुमानस्याप्यनेकत्वप्रसङ्गात् । तदपि प्रत्यक्षमप्रत्यक्षं चाविकल्पो विकल्पश्चासमारोपः समारोपश्चेत्यप्ययुक्तम् । अनुमानस्य हि [6] परमार्थतः स्वसंवेदनप्रत्यक्षात्मनोऽविकल्पस्यासमारोपस्वभावस्याप्रत्यक्षत्वविकल्पत्वसमारोपत्वादेः परापेक्षया प्रज्ञप्तत्वाद् विरुद्धधर्माध्यासाभावात् कथं भेदसिद्धिः । स एवायमिति तु प्रत्यभिज्ञानस्य स इत्यस्पष्टाकारयोगित्वम्, अयमिति स्पष्टाकारयोगित्वमिति विरुद्धधर्मद्वयं भेदकम् ।

न चैवं वक्तव्यम् । तत्तेदन्तापेक्षया प्रत्यभिज्ञानस्याप्येक[64a.1]स्यैव पारोक्ष्यापारोक्ष्यमविरुद्धमिति । न हीदमेकाकारतया व्यवस्थितम्, येनानुमानवदस्यापि पारोक्ष्यापारोक्ष्यव्यवस्थामात्रं स्यात् । यावदतीतार्थाकारानुकारो वर्तमानार्थानुकारश्च स्वधर्मो न भवति तावत्तदर्थगोचरतैव नास्ति । कुतः पारोक्ष्यापारोक्ष्यव्यवहारो भविष्यति । तस्मात् स्पष्टास्पष्टाकारद्वयविरुद्धधर्माध्यासात् प्रत्यभिज्ञानं प्रत्ययद्वयमेतदि[2]ति स्थितम् ॥

तथा सहेतुकविनाशस्वाभाव्यमप्यसिद्धो हेतुः । यत्पुनरत्रोक्तम् । सहेतुकविनाशत्वं घटस्याग्निधूमयोरिव प्रत्यक्षानुपलम्भतो मुद्गरघटविनाशयोरपि कार्यकारणभावसिद्धौ सिद्धमिति । तदसङ्गतम् । अग्निधूमयोरपि दृश्यत्वात्, प्रत्यक्षानुपलम्भतो धूमस्य वह्निकार्यता सिध्यतु । विनाशशब्दवाच्यस्त्वर्थो [3] न कश्चिदिदन्तया दृष्टः । कर्परमेव घटमुद्गराभ्यामुत्पद्यमानमुपलब्धम् । यदाहुर्गुरवः ।

दृष्टस्तावदयं घटोऽत्र च पतन् दृष्टस्तथा मुद्गरो
दृष्टा कर्परसंहतिः परमतो नाशो न दृष्टः परः ।
तेनाभाव इति श्रुतिः क्व निहिता किं चात्र तत्कारणं
स्वाधीनः पलिघस्य केवलमियं दृष्टा कपालावलिः ॥

तदभावो दृश्या[4]नुपलब्धिबाधितः कथं प्रत्यक्षतो मुद्गरादिकार्यमवधार्यः ।

यत्पुनरस्मिन्नदृश्यमानेऽपि दृश्यत इति वाग्जालं सा भण्डविद्या । तद्वचनाद् गृह्णन्नपि पशुरेव । तथा हि

कस्यचित् प्रतिभासेन साध्यतेऽप्रतिभासि यत् ।
प्रतिभासोऽस्य नास्तीति नोपपत्तेस्तु गोचरः ॥ इति ।

प्रयैवं वक्तव्यम् । किमन्येन ध्वंसेन, कर्परमेव घटध्वंसोऽस्तु । [5]तथा च सति मुद्गराद्यभावे कर्पराभावात् घटस्थैर्यमव्याहतमिति दुराशा खल्वेषा । तथा हि यथा नाशशब्देन कर्परमुच्यते तथा यद्यभावशब्देनापि कर्परमेवोच्यते तदैकत्र प्रदेशे घटमेकमपनीय घटान्तरन्यासे तत्रापनीतघटस्याभावव्यवहारो न स्यात् । तत्प्रध्वंसकपालयोस्तत्रानुत्पादात् । तस्माद[6]पनीतघटस्य प्रच्युतिमात्रापेक्षया न्यस्तघटेऽभावव्यवहारस्तथा मुद्गरादिकारणाभावात् प्रध्वंसकर्परयोरनुत्पादेऽपि प्रच्युतिमात्रापेक्षयैव प्रतिक्षणमन्यान्यत्वव्यवहारो घटस्य सिध्यतीति कुतः स्थैर्यसिद्धिः । तस्मात् प्रध्वंसकर्पराभावेऽपि प्रच्युतिमात्रात्मकभावापेक्षयाप्यस्मन्मतमव्याहतम् । यदाहुर्गुरवः ।

आस्तां कर्परपं[65b.1]क्तिरेव कलशध्वंसो न चेयं पुरा
तेन स्थैर्यमपि प्रसिध्यतु ततो भिन्नेन नाशेन किम् ।

अत्रोत्तरम्,

नाशः सैव यथोच्यते यदि तथा भावोऽपि कुम्भान्तर-
न्यासेऽभाववचः कथं मतमतः सिध्यत्यभावोऽपि नः ॥

इति ।

ननु यदि स्वहेतुजनितो नाशो नास्ति, कथं क्वचिदेव देशे काले घटो नष्ट इति प्रतीतिनियमः । न च मुद्गरादन्यो नाशस्य हेतुर्वक्तव्यः । प्रागपि नाशसम्भवे नष्टघटबुद्धिसम्भवप्रसङ्गात् । यदाहुः ।

नाशो नास्ति यदि स्वहेतुनियतः किं देशकाले क्वचित्
कुम्भो नष्ट इति प्रतीतिनियमस्तेनास्ति कार्यश्च सः ।
नाप्यन्यत् किल कारणं रयवतो दण्डात्पुराप्यन्यथा
नाशोक्ता न कृता विनष्टघटधीः केनोद्धुरा वार्यते ॥

इति चेत् । तर्हीदानीमर्थापत्त्या प्रध्वंसं प्रसाध्य मुद्गराधीनत्वमस्य साधयितु[3]मारब्धम् । तथा च सति धूमाग्निवत् प्रत्यक्षतः प्रध्वंसस्य मुद्गरादिकार्यत्वं सिद्धमित्युत्फुल्लगल्लमुल्लपितं व्यालुप्तम् ।

न चार्थापत्तितोऽपि तत्सिद्धिः सम्पद्यते, कुतो नष्ट इति प्रतीतेरन्यथाप्युपपद्यमानत्वात् । विनाशं विनापि हि घटदर्शनवतो मुद्गरकृतकपालानुभव एव नष्टघटावसायसाधनः, किमपरेण नाशेन कर्तव्यम् । घटो नष्ट इ[4]ति बुद्धेर्घटनिश्चयपूर्वकमुद्गरकृतकपालानुभवमात्रान्वयव्यतिरेकानुविधानदर्शनात् । न चेयं सामग्री पूर्वमप्यस्ति । मुद्गराभावे कर्परपंक्तेरेवाभावात् कथं प्रागपि नष्टघटबुद्धिप्रसङ्गः सङ्गतो नाम । यदाहुर्गुरवः ।

दृष्टेऽम्भोभृति मुद्गरादिजनिता दृष्टा कपालावली
सङ्केतानुगमाद्धि नष्टघटधीस्तावत् समुत्पद्यते ।

सामग्र्या[5]म्हि नाशनाम न किमप्यङ्गं च कार्यमपि
स्यादेषा न कदापि नापि च पुराप्येषा समग्रा स्थितिः ॥

अर्थापत्तिरतो गता क्षयमियं न ध्वंससिद्धौ प्रभुः । इति ।

यदि नाशानुभवो नास्ति कपालानुभवात् कपालकल्पनैव स्यात् । न नष्टघटबुद्धिरिति चेत् । तदेतदतिसाहसम् । घटनिश्चयपूर्वककपालवलयदर्शनादेव नष्टघटबुद्धिः साक्षा[6]देवानुभूयमानत्वात् । तदपलापे धूमादीनामपि दहनादिपूर्वकत्वनिश्चयो न स्यादित्यतिप्रसङ्गः ।

ननु घटो नष्ट इति बुद्धिर्विशेष्यबुद्धिः । सा च विनाशं विशेषणमाक्षिपतीति चेत् । तदसत्, यतः ।

स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणम् ।

उच्यते । न चाविद्यमानमदृश्यं वा स्वबुद्ध्या किञ्चिद्रञ्जयति । प्रयोगोऽत्र । यस्य न स्वरूपनिर्भासस्तन्न कस्यचित् स्वानुरक्त[65a.1]प्रतीतिनिमित्तम् । यथा करिकेशरः । नास्ति च स्वरूपनिर्भासो ध्वंसस्येति व्यापकानुपलब्धिः । नास्या असिद्धिः । अभावस्य स्वरूपेणावेदन्तया निर्भासाभावात् । न च विरुद्धता, सपक्षे भावात् । नाप्यनैकान्तिकत्वम् । प्रतिभासाभावेऽपि स्वानुरक्तप्रतीतिहेतुत्वे शशविषाणादेरपि तथात्वं स्यादित्यतिप्रसङ्गः ।

ननु

न ध्वंसेन विना विनश्यति जगद् भावेन सार्धं स चेत्
सत्त्वासत्त्व किमस्तु वस्तुनियतं भावानुजोऽसौ ततः ।
भावात् तेन तु भिन्नकारणतया तत्कारणासम्भवे-
ऽभावात्तेन कृतान्यतापि गलिता भङ्गः कुतोऽनुक्षणम् ॥

अत्रोच्यते । कारणान्तरादुत्पद्यमानो ध्वंसोऽभिन्नो भिन्नो वा ।
नाद्यः पक्षः । भिन्नकारणत्वात्, तैरनभ्युपगतत्वाच्च ।

अथ द्वितीयः पक्षः । तदा कः पुनर्भावस्य प्रद्वेषो येन प्रध्वंसाख्ये वस्तुनि स्व[3]हेतोरुत्पन्ने निवर्तते नाम ।

यत्पुनरेतदुच्यते । नाभावस्योत्पादे भावस्य परा निवृत्तिः । किं स्वभावोत्पत्तिरेव तन्निवृत्तिरिति । कथमन्यस्योत्पादेऽन्यस्य निवृत्तिः । अत्र स्वभावभेदैवोत्तरं वाच्यम् । ये परस्परपरिहारस्थितयः स्वहेतुभ्यो जायन्ते, नहि स्वतोऽन्यस्याङ्कुरस्य वह्निर्न कारणमित्यविशेषाद् भस्मनोऽपि न कारणम् । [4]स्वभावभेदेन तु कार्यकारणभावस्यापि परस्परपरिहारस्थितिनियमेऽपि तुल्यम् । यथा चोत्पादस्य पुरस्तादखिलसामर्थ्यरहितस्याङ्कुरप्रागभावस्यापकारं किञ्चिदकुर्वन्तोऽपि बीजादयोऽङ्कुरमारभमाणाः प्रागभावं निवर्तयन्ति । तदुत्पादस्यैव तत्प्रागभावनिवृत्तिरूपत्वात् । एवं तदभावहेतवोऽपि भावस्यापि किञ्चित्करा

[5] अपि तदभावमादधानास्तन्निवर्तयन्ति । अभावोत्पादस्यैव भावनिवृत्तिरूपत्वात् । तेन पूर्ववन्नार्थक्रियाकरणप्रसङ्गः इति । तदुचितं स्याद् यदि कार्यकारणयोरिवास्याप्यात्मा प्रमाणप्रतीतः स्यात् । केवलं दृश्यानुपलम्भग्रस्तोऽप्येतस्मिन्नुपलभ्यत इति प्रलापो व्यक्तमियं भण्डविद्येत्युक्तम्[1] ।

अर्थापत्तिरपि क्षीणेत्यपि प्रागभावस्य च दृष्टा[6]न्ततवेनोपन्यासो भण्डालेख्यन्यायः ।

किञ्च कः पुनरत्र विरोधः ।

सहस्थानाभावो यदि तव विरोधोऽर्थविपदोः
सहस्थानासङ्गः क्षणमपि यथा शीतशिखिनोः ।
स च ध्वंसो ध्वंसान्तरमुपनयन् संप्रति भवेद्
विरोधी सोऽप्यन्यं क्षयमिति न नाशः कथमपि ॥

अन्यथा सिद्धसत्तामात्रेण विरोधित्वे सर्वं सर्वेण विरुद्धं प्रसज्येत । स्वभावालम्बनमप्यदर्शनादेव नि[65b.1]रस्तमिति ।

अथान्योन्याभावप्रकृतिकतयार्थे सति तदा
क्षयस्यैवाभावः सह भवतु वा हेतुबलतः ।
अनेन ध्वंसे च प्रकृतहतिरस्य त्वनुदये
बलीयानेवार्थः स्वयमपरथाऽन्येन किमिह ॥

सत्त्वासत्त्व किमस्तु वस्त्विति तु प्रसङ्गस्त्रिलोचनप्रस्तावे निराकरणीयः ।

अतएवात्रप्रस्तावे भुवनैकगुरून् भगवतः कीर्तिपादानवमन्यमानः शङ्करः पशोरपि पशुरिति[2]कृपापात्रमेवैष जाल्मः ।

यदप्याह त्रिलोचनः । भावव्यतिरिक्तां निवृत्तिमनिच्छद्भिरशक्या स्वरूपनिवृत्तिरवस्थापयितुम् । या हि तस्य प्राक्तनी काचिदवस्था भवद्भिरर्थक्रियानिर्वर्तनयोग्या दृष्टा सैव यद्युत्तरकालमप्यनुवर्तते तर्हि स्वरूपेणैव निवृत्तो भावः कथमवस्थाप्यते । तदानीमयं नष्टो नाम यदि स्वहेतुप्रतिलब्धस्वरूपव्य[3]तिरेकिणी तस्य काचिदवस्थोत्पाद्यत, उत्पत्तौ सैव तस्यात्मान्तरं जातमित्यतादवस्थ्यमेवास्य[2] विनाशं ब्रूमः । तादवस्थ्य[3]तादात्म्ये च स्वरूपेण निवृत्तो भाव इत्यस्य शब्दस्य सत्यमर्थं न विद्मः । स्वरूपनिवृत्तिः खल्वियं भवन्ती भाव एव स्यात्, भावादन्या वा । तत्त्वे स्वकारणेभ्यो निष्पन्नस्यार्थस्यान्यथानुपपत्तावुत्पत्तेरारभ्य स[4]स्वान्नित्यत्वं प्रसज्येत । अन्यत्वे च तदेव निवृत्तेरन्यत्वनिवृ ति[रिति] प्रियमनुष्ठितं प्रियेण । तस्मादुत्सृज्य विभ्रमं नाशोत्पत्तिरेव [न]ष्टत्वमभ्युपगन्तव्यमिति ।

1. Cf. वादन्याय pp. 89, 134 and ता. टी. p. 1169,

2, 3. तादवस्थ्य in both places—Ms.

तदेतदज्ञानफलम् । तथा हि

स्वकारणादेव यथान्यदेशविच्छिन्नरूपः समुदेति भावः ।
विच्छिन्नभिन्नक्षणवृत्तिरेवं स्वकारणादेव न जायते किम् ॥
अभावतोऽर्थान्तररूपबाधे तत्रा[5]पि बाधान्तरमीक्षणीयम् ।
प्रदीपदृष्टान्तमतं न कान्तं स्वरूपसन्दर्शनविप्रयोगात् ॥

यथा हि देशान्तरपरावृत्तमनीलादिपरावृत्तं च स्वहेतोरुत्पन्नं वस्तु तथा द्वितीयक्षणान्तरपरावृत्तमपि । यथा चान्यदेशानवस्थायित्वं तद्देशावस्थायित्वेनाविरुद्धम्, विरुद्धं च देशान्तरावस्थायित्वेनैव । तथा द्वितीयक्षणानवस्थायित्वं प्रथ[6]मक्षणावस्थायित्वेनाविरुद्धम् । विरुद्धं पुनर्द्वितीयक्षणावस्थायित्वेनैव । केवलं देशान्तरद्वितीयक्षणयोस्तत्प्रच्युतिमात्रं व्यवह्रियते । तदन्योन्याभावप्रध्वंसाभावयोः पदार्थयोः सद्भावेऽप्यदार्यम् । अभावान्तरास्वीकारेऽपि भावाभावयोरप्यमिश्रत्वास्वीकारे तादात्म्यप्रसङ्गात् । तस्माद् भावाभावयोस्तादात्म्यमिति । यथार्थक्रियाकारित्वस्य तद्देशवर्ति [66a.1]त्वनीलत्वादिभिन्नविरोधस्तथा द्वितीयक्षणानवस्थायित्वेनापीति विवक्षितम् । परमार्थतस्तु धर्मिधर्मयोस्तादात्म्यं व्यावृत्तिकृतो भेदव्यवहार इति अपोहसिद्धौ प्रसाधितम् । एतच्चोक्तक्रमेणाविरुद्धमापादितम् । एतावति तु तत्त्वे वाक्छलमात्रप्रवृत्ता द्वेषविषज्वलितात्मानः क्षुद्राः प्रलपन्तीति किमत्र ब्रूमः ।

ततश्च व्यतिरिक्तनिवृत्त्युत्पत्तिमन्तरेण स्वरूपनिवृत्तेरुपपत्तेः कथं क्षणा[2]दूर्ध्वं प्राक्तनसत्तावस्थितिः । तस्मादुत्सृष्टविभ्रमं नष्टव्यवहारमात्रमस्तु । न त्वस्यान्यत् किञ्चिज् जायेत । भावस्य [1]तादवस्थ्यप्रसङ्गात् । अभावः कथं निषिध्यत इति चेत् । न, तदनुत्पत्तिमात्रविषयस्य वाचानिश्चयेन च पश्चादभावव्यवहारमात्रप्रवर्तनस्येष्टत्वाद् वस्तूत्पत्तेरेव निषिद्धत्वात् ।

ननु केयं वाचोयुक्तिः, अभावव्यवहारमात्रमि[3]ष्यते पश्चान्नाभाव इति । एवं सति विसंवादिताप्रसङ्गोऽभावव्यवहारस्य । अभावश्च मिथ्येति भाव एव प्रतिषेद्धव्यः स्यात् । स चाभावः पश्चा[द्] भवतीति स्फुटतरमस्य कादाचित्कत्वमात्महेतुकत्वम्, वस्तुत्वं चेति ।

असदेतत् । अभावाख्यवस्त्वन्तरस्वीकारेऽपि प्रच्युतिमात्रापेक्षयापि व्यवहारस्य चरितार्थत्वप्रतिपादनात् । यत्तु तद्विविक्त[4]भूतलादेर्विषयत्वमाशङ्कयोक्तम्, न भूतलादेर्वस्त्वन्तरत्वात् । न च वस्त्वन्तरे प्रतिपादिते प्रतीते वा घटादि वस्तुभूतमिति प्रतिपादितं प्रतीतं वा भवति । एवं वस्त्वन्तरमेव नाश इति ।

अस्मिन् मते यद् दूषणमुक्तं तत् स्वयमेव परिहृतं स्यादिति, तदप्यसम्बद्धं, केवलं हि भूतलमस्य विषय इति कथं न घटादेरभूतत्वबोधः । यैव हि [5]घटाद्यपेक्षया

1. तवदवस्थ्य Ms.

कैवल्यावस्था प्रदेशस्य स एव घटविरहः । एवमादिनाप्येवं केवलप्रदेशप्रतिपादने कथमिव न प्रकृतघटाद्यभावप्रतिपादनम् । कैवल्यं चासहायप्रदेशादव्यतिभिन्नमेव ।

न चेह घटो नास्तीति प्रत्ययस्य घटवत्यपि प्रदेशे प्रसङ्गः । स्वहेतोस्तथो-त्पन्नस्य सघटप्रदेशस्य केवलप्रदेशादन्यत्वात् । [6] न च प्रत्यभिज्ञानतः । सघटाघट-प्रदेशयोरेकत्वं पूर्वमस्य निराकरणात् । न च विनाशहेतोरसामर्थ्यवैयर्थ्याभिधाने-ऽङ्कुरस्यहेतोरपि तथाभिधातुमुचितम् । असिद्धे हि कार्ये हेतोराश्रयणमवार्यम् । सिद्धे चेवं चिन्त्यं, यदि हेतोर्नित्योऽनित्यो वाऽर्थो जातः किं नाशकारणेनेति हेतुपुरस्कारेणैव प्रवृत्तेः ।

न चैवमसिद्धेऽङ्कुरादौ कार्ये शक्यमभि[66b. 1]धातुम् । स्वरूपस्यैवाभावात् । तद्धर्मकत्व[तद्]¹धर्मकत्वादिपर्यनुयोगस्य निर्विषयत्वात् ।

ननु त्वयापि भावाभावयोर्लक्षणभेदोऽभिहितः । तत्कथमेकत्वं सर्वार्थानाम् । लक्षणभेदादेव भेदव्यवस्था । ततोऽपि चेन्न भेदव्यवस्थितिः, न कस्यचित् कुतश्चिद् भेदव्यवस्थितिरित्यद्वैतप्रसङ्ग इति चेत् । न । यो हि नश्वरस्वभावः स एव नाशो नश्यतीति बहुलाधिकारात् कर्तरि घञः प्रसाधनात् तं [2]नाशं भावस्वभावमिच्छामः । नशनं नाश इति प्रसज्यात्मा द्विधा कर्तव्यः । तत्त्वतस्तावद् वस्तुत्वविरहात् तत्त्वा-न्यत्वविरहित एवासौ भावो न भवतीति तद्भावनिषेधमात्रमायातं तु भवति । खरशृङ्गा-दिवत् । संवृतौ तु यथा कालभेदेन विकल्प्यमानः कादाचित्क इव प्रतिभाति तथा सर्वोपाख्याविरहरूपतया भावाद्भिन्न इव प्रतिभातीति नाव[3]स्तुत्वोपलक्षणभेदाख्यान-विरोधः । एवं च सति संवृत्या लक्षणभेदे भावाभावयोर्भेदस्येष्टत्वात् । तत्त्वेन च लक्षणैकताविरहे भावस्य तेनैक्यनिषेधात् कथमद्वैतप्रसङ्गोपालम्भः ।

स्यादेतत् । न च विवेकाप्रतीतौ तद्विविक्तग्रहणं भवति । तद्विवेकश्च न भूतलादिस्वरूपमेव विशेषणत्वादिति । तदेतन्न्यायबहिष्कृतम् । विशे[4]षणविशेष्य-भावौ हि सङ्कल्पारूढे रूपे बाह्यार्थस्पर्शे विकल्पशब्दलिङ्गान्तर[1]णां वैयर्थ्यप्रसङ्गादिति शास्त्रे विस्तरेण प्रतिपादनात् । स च सङ्कल्पोऽभिन्नमपि भावं भिन्नमिवाकलयति । यथा शिलापुत्रकस्य शरीरम्, शरीरे करणादयः । लम्बकर्णो देवदत्त इत्यादि । तस्मात् कल्पनाधीनो विशेषणविशेष्यभावः । अभिन्नेऽपि भा[5]वे भेदविपक्षापेक्षो कामं भेदनिबन्धनमातनोतु ।

स्खलद्वृत्तिरयं राहोः शिर इत्यादिनिर्देश इति चेत् । यदि सत्यमेतत्, तदा शिरसोऽभिन्नस्य राहोरिव घटात्तलादेरतिरिक्तस्य विवेकस्य दृश्यानुपलम्भबाधितत्वादयमपि स्खलद्गतिरेव, तदपि नेति कोऽपरानं प्रमाणम् । तस्म[1]त्सघटात् प्रदे-

1. Two letters added but indistinct.

र्ग[6]न्तरात् प्रवेश एवायमन्यो घटविविक्तः स्वहेतोरुत्पन्नो न तु घटविवेकेन विशेषितः । स्वहेतोरुत्पन्नस्य विविक्तस्याभावे विवेकस्याभावात् । किञ्च ।

व्याप्तं भिदा यदि विशेष्यविशेष[ण]त्वं
भेदात्ययान्नु तदा तदभाव एव ।
देशो विशिष्ट इति चास्ति यथा तथेद-
मप्यस्ति दृश्यमतभेदवृगस्ति नेति ॥

तस्मान्नाभावो नाम कश्चिद् यत्र कारणव्यापारः । तदे[67a. 1]वं सहेतुकविनाशत्वादिति हेतुः स्वरूपासिद्ध इति स्थितम् ॥

सतामक्षणिकत्वं कार[ण]वत्त्वादित्यप्यसम्बद्धमेव । क्षणिकत्वकारणवत्त्वयोर्वि-रोधाभावादक्षणिकत्वेन कारणवत्त्वस्य व्याप्तेरसिद्धेः । सन्दिग्धव्यतिरेकात् । न चास्य विपर्यये वृत्तिशंकानाशस्य सहेतुकत्वमेव निवर्तयति । उक्तक्रमेण नाशस्यैवाभावादिति ॥

तथा प्रमेयत्वादपि स्थिरसिद्धिर्मनोरथमात्रम् । [2]साकारवेदनोदयपक्षस्थितौ हि द्वितीयक्षणानुवृत्तावप्यर्थस्य व्यवहितत्वात्, प्रकाशानुपपत्तेर्विषयस्वरूपवेदनमेव ज्ञानस्य विषयवेदनम् । एवं च वर्तमानानुरोधः, अतीतेऽपि तत्प्रत्यासत्तेरप्रच्युतेः । न चातिप्रसङ्गः । अनन्तरातीतावन्येन क्षणेन सारूप्यासमर्पणात् । ततश्च कारणत्वाद् यदि नाम प्रमेयत्वस्य पूर्वकालस[3]त्त्वेन व्याप्तिस्तथापि प्रमेयत्ववत् पूर्वकालसत्त्वमपि क्षणिकेऽविरुद्धमिति प्रमेयत्वाक्षणिकत्वयोर्व्याप्तिसाधनो व्यापकानुपलम्भोऽसिद्धः । ज्ञाना-कारार्पकत्वं हि हेतुत्वम्, प्रमेयत्वं प्रामाणिकप्रतीतम् । तच्चानन्तरातीत एव क्षणे समुप-पद्यते ।

ज्ञानसत्त्वासमयेऽर्थानुवृत्तेरभावान्निर्विषयतेति चेत् । नन्वननुवृत्तावपि तदर्पिताकार-स्वरूपसंवेद[4]नमेव तद्वेदनम् । तदेव च सविषयत्वम् । इयं च प्रत्यासत्तिरन-न्तरातीतेऽपि क्षणेऽक्षीणेति न द्वितीयक्षणानुवृत्तेरनुरोध इत्युक्तम् । अतः सन्दिग्ध-व्यतिरेकित्वादनैकान्तिकमेव प्रमेयत्वम् ।

अथ साकारवादविद्वेषादनाकारज्ञानग्राह्यत्वं प्रमेयत्वमभिप्रेतं तदाऽसिद्धताऽस्य हेतोः । इन्द्रियार्थसन्निकर्षविज्ञानमुत्पद्यतां नाम । तच्चानु[5]भवैकरसत्वेन सर्वत्रार्थे सदृशाकार-त्वात् कस्य ग्राहकमस्तु, येनाभिसम्बद्धमिति चेत् । आत्ममनःसंयोगादीनामपि ग्रहणं स्यात् । जनकस्य ग्रहणमिति चेत् । तथाप्यात्मादीनां ग्रहणप्रसङ्गः । विषय-त्वेन जनकस्य ग्रहणमित्यप्यसाधु । विषयत्वस्याद्याप्यनिश्चयात् । इदं दृष्टं श्रुतं वेद-मित्यध्यवसायो यत्रार्थे स विषय इति चेत् । [6] नन्वस्यैव प्रतिनियतो व्यवहारः । कः पुनरत्र प्रत्यासत्तिनियम इति पृच्छामः । स चेदुपवर्णयितुं न शक्यते, व्यवहारोऽपि त्वन्मते नियतो न स्यादिति ब्रूमः । अस्ति तावदिति चेत् । अतएवार्थसारूप्यमसाधारणं प्रत्यासत्तिनिमित्तमस्तु । निर्निमित्ते नियमायोगात् ।

ननु सारूप्यमप्यर्थादर्शने कथमवधार्यते । तच्च किमेकदेशेन, सर्वात्मना वा । आद्ये पक्षे[67b.1] सर्वं सर्वस्य वेदनं स्यात् । द्वितीये तु ज्ञानमज्ञानतां व्रजेत् । किञ्च सारूप्यादर्थवेदनेऽनन्तरं ज्ञानं तुल्यविषयं विषयः स्यादिति चेत् । माभूदर्थस्य दर्शनम् । आकारविशेषबलादध्यवसितार्थस्यार्थक्रियाप्राप्तेरेवार्थोऽपीदृश इति सारूप्यव्यवहारो विरुद्धः । अतएव स्थूलगतं परमाणुगतं वा सारूप्यं न चिन्त्यते । ज्ञानाकारस्य स्थूलत्वेऽप्येकसामग्रीप्रतिबद्धपुञ्जविशे[2]षादप्यभीष्टक्रियाकरणात् पुरुषार्थसिद्धेः । सारूप्यं चैकदेशेनैव । न चात्र सर्ववेदनप्रसङ्गः । सर्वेषां ज्ञानं प्रत्यजनकत्वात् । जनकानां च स्वव्यपदेशनिमित्तासाधारणैकदेशार्पकत्वेन ग्राह्यत्वात् । नापि तुल्यविषयानन्तरज्ञानग्रहणप्रसङ्गः, तस्य स्वसंवेदनादेव प्रमाणात् सिद्धत्वात् । प्रमाणान्तरस्य तत्र वैयर्थ्यात् । जड़[3]त्वे सत्याकारार्पकस्य वस्तुनो ग्राह्यत्वादित्यस्यार्थस्याभीष्टत्वाच्च । बाह्यार्थस्थितौ चेयं चिन्तेति सर्वमनवद्यम् । तदेवमयं प्रमेयत्वादिति हेतुः साकारवादपक्षे सन्दिग्धव्यतिरेकः । निराकारपक्षे चासिद्ध इति स्थितम् ॥

न चार्थापत्तिरपि स्थिरात्मसाधनी । कार्यकारणभावग्रहणादीनामन्यथोपपत्तेः ।

तथा हि उपादानोपादेयभाव[4]स्थितचित्तसन्ततिमप्याश्रित्येयं व्यवस्था सुस्थेति कथमात्मानं प्रत्युज्जीवयतु । तत्र कार्यकारणभावप्रतीतिस्तावदनाकुला । तथापि प्राग्भाविवस्तुनिश्चयज्ञानस्योपादेयभूतेन तदर्पितसंस्कारगर्भेण पश्चाद्भाविवस्तुज्ञानेनास्मिन् सतीदं भवतीति निश्चयो जन्यते । तथा प्राग्भाविवस्त्वपेक्षया केवलभूतलनिश्चायकज्ञानोपादेयभूते[5]न तदर्पितसंस्कारगर्भेण पश्चाद्भाविवस्त्वपेक्षया केवलभूतलनिश्चायकज्ञानेनास्मिन्नसतीदं न भवतीति व्यतिरेकनिश्चयो जन्यते । यथोक्तम् ।

एकावसायसमनन्तरजातमन्य-
विज्ञानमन्वयविमर्शमुपादधाति ।
एवं तदेकविरहानुभवोद्भवान्य-
व्यावृत्तिधीः प्रथयति व्यतिरेकबुद्धिम् ॥

अतएव देवदत्तेनाग्नौ प्रतीते यज्ञदत्तेन [6]च धूमे प्रतीते न कार्यकारणभावग्रहणं तज्ज्ञानयोरुपादानोपादेयभावाभावात् । यत्र त्वेकसन्ताने ज्ञानक्षणयोरुपादानोपादेयभावस्तत्र कार्यादिग्रहः सुग्रहः । अन्यथा सत्यपि नित्यात्मनि प्रतिसन्धातरि कार्यकारणभावादीनामप्रतीतिरेव स्यात् । तथा हि आत्मनः सकाशात् प्रतिसन्धेयबुद्धीनामभेदो भेदो वा भेदाभेदो वा ।

प्रथमपक्षे आ[68a.1]त्मैव स्यात् प्रतिसन्धाता । बुद्धय एव वा स्युः प्रतिसन्धेया इति कः प्रतिसन्धानार्थः ।

भेदपक्षेऽपि बुद्धिभ्यो भिद्यमानस्य जड़स्यात्मनः कः प्रतिसन्धानार्थ इति न विद्मः । बुद्धियोगाद् द्रष्टृत्ववत् प्रतिसन्धातृत्वमिति चेत् । बुद्धिरेव तर्हि द्रष्ट्री प्रतिसन्धात्री चेति नियमस्वीकारे तद्योगादस्य तथात्वमिति किमनेन याचितकमण्डनेन । बुद्धीनां कर्तृत्वा-

भावाविति चेत् । तद्द्वारेणापि तर्हि तस्या[2]त्मनो द्रष्टृत्वादिव्यवहारानुपपत्तिः । यदि हि बुद्धिर्हेतोः फलस्य वा द्रष्ट्री स्यात् तदानन्तर्यंप्रतिनियमस्य चानुसन्धात्री कल्पिता । तद्योगाद् द्रष्टृत्वं प्रतिसन्धातृत्वं चोच्यत इति स्यादपि प्रतिविषयमलब्धविशेषायां च बुद्धौ सम्बन्धोऽपि न विशेषं व्यवहारयितुमीशः । अधुना निबन्धनाधिगन्ता । अधुना फलस्य । इदानीं प्रतिसन्धातेति । [3] तथापि च बुद्धियुतविशेषस्वीकारे तु किमपरेणात्मना कर्तव्यम् । तावतैव पर्याप्तत्वाद् व्यवहारस्य ।

स्थिरात्मानमन्तरेण सैव बुद्धिर्न स्यादिति चेत् । केनैवं प्रतारितोऽसि । अहो मोहमाहात्म्यं यदीदृशानपि परवशीकरोति । तथा हि नेदमिदमन्तरेण यदुच्यते तत् खल्वन्यत्र प्रत्यक्षानुपलम्भाभ्यां सामर्थ्यावधारणे सति युज्यते वह्नेरिव [4]धूमे । चक्षुरादिवद्वा दृष्टकारणान्तरसामग्र्या कार्यादर्शने पश्चाद् दर्शने च किञ्चिदन्यदपेक्षणीयमस्तीति सामान्याकारेण ।

आद्यः पक्षस्तावन्नास्तीति व्यक्तम् । द्वितीयोऽपि न सम्भवी । नहि कारणबुद्धिसमनन्तरं कार्यबुद्धौ सत्यां निश्चयप्रवृत्तस्येदमस्यानन्तरं दृष्टं मयेति प्रतिसन्धानमदृष्टपूर्वं कदाचित् । यतोऽन्यस्य सामर्थ्यपरिक[5]ल्पनं स्यादित्युदस्य व्यामोहमुक्तक्रमेणैव कार्यकारणग्रहणव्यावस्था स्वीकर्तव्या ।

भेदाभेदपक्षस्तु धिक्कार एव । तस्यैव तदपेक्षया भेदाभेदविरुद्धधर्माध्यासादेकत्वानुपपत्तेः । ततश्च यद्भिन्नं भिन्नमेवाभिन्नं चाभिन्नमिति नैकस्य भेदाभेदौ । तथाप्यभेदे विश्वमेकमिति युगपदुत्पादस्थितिप्रलयप्रसङ्गः । एवं क्रमिवस्तु[6]ग्राहकैः क्रमिज्ञानैरुपादानोपादेयभूतः साक्षात् पारम्पर्येण क्रमेणामी जायन्त इति निश्चयो जन्यते । ऐककालिकानेकवस्तुग्राहकैरेव तज्ज्ञानैरेकोपादानत्वात् सकृदिमानि जातानीति विकल्पः क्रियत इति क्रमाक्रमग्रहणमप्यनवद्यम् ।

कथमनेकज्ञानादेकविकल्प इति चेत् । को दोषः ।

भवन्तु भिन्ना मतयस्तथापि ता
दधत्युपादानतयैकक[68b. 1]ल्पनम् ।
न भिन्नसंख्या फलहेतुबाधनी
न चान्यसन्तानभवा इवाक्षमाः ॥

यदप्युक्तं शङ्करेण

अथ पूर्वोत्तरक्षणयोः संवित्ती । ताभ्यां वासना, तया हेतुफलभावाध्यवसायी विकल्प इति चेत् । तत् किमिदानीं यत्किञ्चिदाशङ्कितेन । वक्तव्यमित्येवं विधिरनुष्ठीयते भवता । विकल्पो हि गृहीतानुसन्धानमतद्रूपसमारोपो वा स्यात् । न तावत् पूर्वः पक्षः । अदृष्टान्वयव्यतिरेकस्य पुरुष[2]स्य हेतुफलभावाग्रहेऽनुसन्धानप्रत्ययहेतोर्वासनाविशेषस्यैवानुपपत्तेः । अगृहीतस्य चानुसन्धानेऽतिप्रसङ्गादिति ।

तदेतन्न सम्यगालोचितम् । यतो हेतुफलभूतयोः पूर्वोत्तरक्षणयोरेकैकेन ज्ञानेनानलु-भवेऽप्युपादानोपादेयभूताभ्यां क्रमिज्ञानाभ्यां हेतुफलत्वे गृहीते एव । केवलं हेतुकाले फलाभावात् तद्वि[3]षयसामर्थ्यग्रहणेऽपि फलादर्शनात् तदवसाय एवाप्रवृत्तः कार्यदर्शनेन प्रवर्त्यते । तथा फलावलोकनेऽपि तत्कार्यता गृहीतैव विकल्पेनानुसन्धीयत इति गृहीतानुसन्धानरूप एवायं विकल्प इति यत्किञ्चिदेतत् ।

यदाह महाभाष्यालङ्कारः ।

यदि नामैकमध्यक्षं न पूर्वापरवित्तिमत्,
अध्यक्षद्वयसद्भावे प्राक्[4]परावेदनं कथम् ।। इति ।

तथा स्मरणमभिलाषः, स्वयं विहितप्रत्यनुमार्गणम्, दृष्टार्थकुतूहलविरमणम्, कर्मफलसम्बन्धः, संशयपूर्वकनिर्णयश्च पूर्वपूर्वार्थानुभवैकोपादानकारणैः समर्पितसंस्कारगतैरुत्तरोत्तरार्थानुभवैरेवोपादेयभूतैर्जन्यमानो युज्यत इति किमधिकेनात्मना परिकल्पितेन ।

उपादानो[5]पादेयभावनियमादेव च न सन्तानान्तरे स्मरणादिप्रसङ्गः सङ्गतः । किमिदमुपादानमिति चेत् । उच्यते । यत्सन्तानानिवृत्त्या यदुत्पद्यते तत्तस्योपादानकारणम् । यथा मृत्सन्ताननिवृत्त्योत्पद्यमानस्य कुम्भस्य मृदुपादानमिति शास्त्रे प्रपञ्चितम् । न चात्र परलोकक्षतिः ।

यदप्युक्तम् । चित्तशरीरयोः कियत्कालस्थितिनिबन्ध[6]नस्य दृष्टस्य निवृत्तौ चित्तस्यापि निवृत्तिप्रसङ्गः । मरणवेदनया हि चित्तं विकलम् । ततोऽविकला चित्तान्तरजननावस्था न सम्भवति । तस्मादुपस्थिते मरणदुःखे सर्वसंस्कारविरोधिनि चित्तमप्युच्छिद्यतेति नास्तिक्यमायातमिति ।

तदयुक्तम् । यतो मरणदुःखं चित्तविशेष एव, तस्य चित्तान्तरजननसामर्थ्यस्वभावस्य स्वभावादवार्यैव ज्ञानोत्पत्तिरिति । बन्धान्मोक्षो[69a. 1]ऽपि संसारिचित्तप्रबन्धादनास्रवचित्तप्रबन्धो यः । शुभादिमोक्षयोरपि प्रवृत्तिरवार्या । यतः सत्यप्यात्मन्यहमेव मुक्तो भविष्यामि सुखी चेत्यात्मग्रहणक्षणादध्यवसायात् प्रवर्तते । न पुनरात्मना गलहस्तितः । स चानाद्यविद्यापरम्परायातः पूर्वापरयोरेकत्वारोपको मिथ्यासङ्कल्पो बाधितेऽप्यात्मन्यव्याहतप्रसर इति कथमप्रवृत्तिः । ननु

नैरात्म्यवादप[2]क्षे [तु] पूर्वमेवावबुध्यते ।
मद्विनाशात्फलं न स्यान्मत्तो[1]ऽन्यस्याथवा भवेदिति

अप्रवृत्तिरेवास्त्विति चेत् । अस्तु को दोषः । यदयमात्मग्रहो निर्विषयोऽपि प्रवृत्तिमनाक्षिप्य क्षणमपि स्थातुं [न] प्रभवति । यथा हि जातस्यावश्यं मृत्युरिति ज्ञातवतोऽप्य-

1. मत्तोन्य Ibid Ms.

प्रतिक्रियपुत्रादिमरणे सोरस्ताडमाक्रन्दो मरणादौ च यत्नः शोकोद्रेकात् । एवमविद्योद्रेकादेव नैरात्म्यं जानन्नपि प्रवर्तते । न सुखमस्ति इति किमत्र क्रियताम् । अविद्यायाः प्रवर्तनशक्तेरवार्यत्वात् । प्रत्यभिज्ञा च पूर्वमेव ध्वस्ता । कार्यकारणभावनियतापश्चाद्भाविपूर्वभाविता । सा च क्षणिकेऽप्यविरुद्धा । उपादानोपादेयता च क्रमिस्वसंवेदनज्ञानद्वयेन साक्षात्कृता तत्पृष्ठभाविना निश्चीयत इति, अस[4]त्यस्यात्मनि प्रतिसन्धातरि कार्यकारणग्रहणादय उपपद्यमाना नात्मानमुपस्थापयितुं प्रभवन्ति । अतोऽर्थापत्तिरपि न क्षमेति भाग्यहीनमनोराज्यमिव स्थिरसिद्धिर्विशीर्यत एव । तथा च क्षणभङ्गसन्देहे सत्त्वाद्यनुमानं प्राप्तावसरम् ॥

स्थिरसिद्धिदूषणं समाप्तम् ॥

# चित्राद्वैतप्रकाशवादः

[69a. 4]नमस्तारायै ॥

विनेया स्वपराशेषप्रतिवादिप्र[5]साधनी ।
चित्राद्वैतमताबोधध्वान्तस्तोमकदर्थिनी ॥

इह खलु सकलजडपदार्थराशौ प्रत्याख्याते निराकृते च निराकारविज्ञानवादे प्रतिहते चालीकाकारयोगिनि पारमार्थिकप्रकाशमात्रे सम्यगुन्मूलिते च साकारविज्ञानालीकत्वसमारोपे प्रतिसन्तानं च स्वप्नवदबाधितदेहभोगप्रतिष्ठाद्याकारप्रकाशमा[6]त्रात्मके जगति व्यवस्थिते यस्य यदा यावदाकारचक्रप्रतिभासं यद्विज्ञानं परिस्फुरति तस्य तदा तावदाकारचक्रपरिकरितं तद्विज्ञानं चित्राद्वैतमिति स्थितिः । तदेवं चित्रमद्वैतं विज्ञानमिति पदत्रयमिह प्रत्युपस्थितम् ।

अत्र च विप्रतिपत्तिर्नाम किं चित्रतायामद्वैते विज्ञानत्वे सर्वत्रैवेति विकल्पाः ।

न तावदसौ चित्रस्वरूपानुसारिणी भवितुमर्हति । तन्मात्रस्य सर्वज्ञानुभव[69b. 1]-सिद्धत्वात्, अन्यथा शशविषाणादाविव जडमिदमलीकं विज्ञानं वेति विप्रतिपत्तीनामनवकाशप्रसङ्गात् । नापि विज्ञानत्वे विवादः कर्तुमुचितः ।

सहोपलम्भनियमाद्[1]

इत्यादिना पूर्वमेव नीलादीनां साकारविज्ञानत्वप्रसाधनात् । अतएव सर्वत्रापि विमतिरसङ्गता । साकारविज्ञानसिद्धावेव चित्राद्वैतवादावतारात् । तस्माच्चित्रतेयमद्वैतविरोधिनीति व्यामोहादेकत्व एव विप्रतिपत्ति[2]रिति । तत्र प्रसाधनं साधनमिदमुच्यते ।

यत् प्रकाशते तदेकम् । यथा चित्राकारचक्रमध्यवर्ती नीलाकारः । प्रकाशते चेदं गौरगान्धारमधुरसुरभिसुकुमारसातेतरादिविचित्राकारकदम्बकमिति स्वभावहेतुः ।

न तावदस्यासिद्धिरभिधातुं शक्यते । प्रत्यक्षप्रमाणप्रसिद्धसद्भावे विज्ञानात्मकनीलाद्याकारचक्रे धर्मिणि प्रकाशमानतायाः प्रत्यक्ष[3]सिद्धत्वात् । न चास्य हेतोर्विरुद्धता सम्भवति । विचित्राकारमध्यवर्तिनि नीलाकारे दृष्टान्तधर्मिणि प्रकाशमानतालक्षणस्य साधनस्य दृष्टत्वात् । ननु चैकत्वे साध्ये यदपरमेकत्वाधिकरणं तदिह दृष्टान्तीकर्तुमुचितम् । न चास्य नीलाकारस्य एकता विद्यते, विरुद्धधर्माध्यासप्रसिद्धत्वा-

1. Cf. सहोपलम्भनियमादभेदो नीलतद्धियोः ।
भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये ॥
quoted in SDS.

भेकत्वस्य सम्भवात् । देशकालाकारभेदो हि विरुद्धधर्माध्यास[4]: । ततश्च यथा चित्रितचकारचक्रस्याकारभेदतो भेदस्तथा नीलाकारस्यापि देशभेदतो भेदः । ततश्च साध्य-शून्यो दृष्टान्तो हेतुश्च विपक्षे परिदृश्यमानो यदि तत्रैव नियतस्तदा विरुद्धः । तत्रापि सम्भवेऽनैकान्त इति चेत् । अत्रोच्यते । यदि देशभेदतो विज्ञानात्मकस्थूलनीलाकारस्य भेदस्तदास्य प्रतिपरमाणुदेशभेदे भेदसम्भ[5]वात् परमाणुप्रचयमात्रात्मको विज्ञानात्मक-स्थूलनीलाकारः स्यात् । तथा च सति सर्वेषां विज्ञान[ा]त्मकनीलपरमाणूनां स्वस्वरूप-निमग्नत्वेन सन्तमसनिमग्नानेकपुरुषवत् व्यतिवेदनाभावात् स्थूलनीलाद्यवभासक-प्रतिभासाभावप्रसङ्गः । न च स्वस्वरूपनिमग्नत्वेनाप्यन्येनान्यस्य वेदनं युज्यते, येन स्थूलप्रतिभासः सङ्गतः स्यात् । ग्राह्य[6]ग्राहकलक्षणयोः पुरस्तादपकर्तव्यत्वात्, न चैवं वक्तव्यम् । परमाणूनां स्वरूपनिमग्नत्वेऽप्येकोपादानतया ज्ञानात्मकः स्थूलः स्थूल-मात्मानं ज्ञास्यतीति सत्यप्येकोपादानत्वे स्वस्वरूपनिमग्नत्वादेव स्थू[illegible] भिन्नस्वात्मनोऽन्योन्यग्राह्यग्राहकभावस्यायोगात् । तादात्म्येन व्यतिवेदनस्य चानभ्युपगमात् ।

बली बलं वेत्ति

इत्यस्यानुपपन्नत्वात् । न च [70a. 1] यथा बाह्यार्थवादे स्थूलै-काकारज्ञानप्रतिभास एव बाह्यपरमाणुप्रचयप्रतिभासव्यवस्था गत्यन्तराभावात्, तथा ज्ञानपरमाणुप्रचयव्यवस्था[पक][1]स्थूलैकाकारयोगिविज्ञानान्तरस्यानभ्युपगमात् । अभ्युपगमे वा तस्यैव दृष्टान्तत्वात् । तस्माद् यावद् यावत् प्रतिभासस्तावत्तावत् स्थूलतयैव व्याप्तः । अस्थूले परमाणौ स्थूलनिवृत्तिमात्रे च प्रतिभासस्य दृश्यानुपलम्भ[2]बाधितत्वात् । यथा प्रसिद्धानुमाने सत्त्वं क्षणिकत्वेन व्याप्तं क्रमाक्रमकारित्वेनापि, क्षणिकत्वाभावाच्च क्रमाक्रमनिवृत्तौ निवर्तमानं क्षणिकत्वे नियतं सिध्यति, एवमत्रापि प्रकाशमानत्वं साधन-मेकत्वेनापि स्थौल्येनापि, एकत्वाभावाच्च विपक्ष। रमाणुपुञ्जात्मन एकत्वनिवृत्ति-मात्रात्मनश्च स्वविरुद्धोपलम्भात् स्थौल्य[3]स्य व्यापकस्य निवृत्तौ निवर्तमा नियतं सिध्यति । ततश्च यथा बहिर्व्याप्तिपक्षे घटे दृष्टान्तधर्मिणि विपर्ययबाधकप्रमाण-बलात् सत्त्वं क्षणिकत्वनियतमवधार्यमाणं सत्त्वात् पक्षे क्षणभङ्गसिद्धिः, तत्रापि नीला-कारे दृष्टान्तधर्मिणि विपर्ययबाधकप्रमाणबलादेव प्रकाशमानत्वमेकत्वनियतमवगम्य प्रकाश-मानत्वा[4]द् विचित्राकारचक्रे साध्यधर्मिण्येकत्वसिद्धिरिति न दृष्टान्तस्य साध्यशून्यत्वम् । नापि हेतोर्विरुद्धता । न चानैकान्तिकता ।

नन्वेकत्वे साध्ये तत्प्रच्युतिर्द्वित्वं च विपक्षः तस्माच्च विपक्षाद्धेतुव्यतिरेक-प्रतिपत्त्यवसरे किं विपक्षात्मा प्रकाशते न वा । प्रतिभासपक्षे प्रकाशमानत्वस्य हेतोः साधारणानैकान्तिकता, विपक्षेऽपि दृष्टत्वात् । अ[5]थ न प्रकाशते तदा सन्दिग्ध-व्यतिरेकित्वम्, कुतो व्यतिरेक इत्यवधेरेवाप्रकाशमानशरीरत्वात् कथमतः साध्यसिद्धि-प्रत्याशा ।

1. Marginal correction त्मक(?) or पक(?) indistinct.

अत्रोच्यते । इह द्विविधो विज्ञानानां विषयः । ग्राह्योऽध्यवसेयश्च । प्रतिभासमानो ग्राह्यः । अगृहीतोऽपि प्रवृत्तिविषयोऽध्यवसेयः । तत्रासर्वज्ञेऽनुमातरि सकलविपक्षप्रतिभासाभावान्न ग्राह्यतया विपक्षो [6]विषयो वक्तव्यः, सर्वानुमानोच्छेदप्रसङ्गात्, सर्वत्र सकलविपक्षप्रतिभासाभावात् । ततो व्यतिरेकासिद्धेः । प्रतिभासे च देशकालस्वभावान्तरितसकलविपक्षसाक्षात्कारे साध्यात्मापि वराकः सुतरां प्रतीयत इत्यनुमानवैयर्थ्यम् । तस्मादप्रतिभासेऽप्यध्यवसायसिद्धादेव विपक्षाद्धूमादेर्व्यतिरेको निश्चितः । तत् किमर्थमत्र विपक्षप्रतिभासः प्रा[70b. 1]र्थ्यते । यदि पुनरस्याध्यवसायोऽपि न स्यात्तदा व्यतिरेको न निश्चीयत इति युक्तम् । प्रतिनियतविषयव्यवहाराभावात् ।

नन्वस्मन्मते वस्त्ववस्त्वात्मकसकलविपक्षप्रतिपत्तिसम्भवात् ततो हेतुव्यतिरेकः संप्रत्येतुं शक्यत एव । न च प्रतिभासमात्रेण सत्त्वप्रसङ्गः । अर्थक्रियाकारित्वलक्षणत्वात् सत्त्वस्य । त्वन्मते तु प्रकाश एव वस्तुत्वम् । अतो विपक्षयोरेकत्वप्रक्षतिद्वित्वयोः प्र[2]तिभासे प्रकाशमानत्वसाधनस्य विपक्षसाधारणता । अप्रतिभासे च सन्दिग्धव्यतिरेकित्वमिति चोद्यं दुरुद्धरमेवेति चेत् । तदेतदसङ्गतम् । तथा हि । धूमादिरवह्न्यादेर्विपक्षाद् व्यावृत्तो वह्न्यादिनियतः सिध्यति, तस्य च वस्त्ववस्त्वात्मकसकलविपक्षपदार्थराशेः स्वरूपनिर्भास इति किं निर्विकल्पकज्ञाने कल्पनायां वा । निर्विकल्पे [3]चेत् । प्रतिभास इति च कोऽर्थः । किं निराकारे ज्ञाने सकलविपक्षादिस्वरूपस्य साक्षात् स्फुरणम्, यदि वा तदर्पितबुद्धिस्वभावभूतसदृशाकारप्रकाशः, अथ समनन्तरप्रत्ययबलायातबुद्धिगतबाह्यसदृशाकारप्रतिभासः, आहोस्विद् बुद्धेरात्मभूतविपक्षसदृशालीकाकारपरिस्फूर्तिः ।

न तावदाद्यः पक्षो युक्तः । देशका[4]लस्वभावविप्रकृष्टानां पदार्थानामर्वाचीने जने निराकारे च ज्ञाने स्फुरणायोगादित्यस्यार्थस्य शास्त्रे एव विस्तरेण प्रसाधनात् । स्फुरणे चासाध्यस्यापि प्रकाशनप्रसङ्गेऽनुमानवैयर्थ्यस्य प्रतिपादनात् ।

नापि द्वितीयः पक्षः । देशादिविप्रकृष्टत्वादेव साक्षात्कारसमर्पणसामर्थ्याभावात् ।

न च तृतीयः सङ्गतः । [5] सादृश्यसम्भवेऽपि समनन्तरबलादेवायातस्य बाह्येन सह प्रत्यासत्तेरभावात् ।

न चतुर्थोऽपि प्रकारः सम्भवति । असत्प्रकाशयोर्विरोधात्, स्फुरतोऽलीकत्वायोगात् । तथाप्यसत्प्रकाश इति किमसदीश्वरादेः ख्यातिः, भासमानो वा आकारोऽसन्, सन् वा न कश्चित् ख्यातीति विवक्षितम् । तत्र यस्य पदार्थस्य स्वरूपपरिनि[6]र्भासः स कथमसन्निति प्राणधारिभिरभिधातव्यः । स्फुरतः केशोण्डुकाकारस्य बाह्यरूपतया. बाध्यत्वेऽपि ज्ञानरूपतयाऽर्थत्वस्य आचार्येण प्रतिपादितत्वात् । ग्राहकाभिमतनिराकारप्रकाशस्याप्यसत्त्वाभिधानप्रसङ्गात् ।

प्रतिभासेऽपि बाधनादसत्यत्वमिति चेत् । किं तद्बाधकम्, प्रत्यक्षमनुमानं वा । यद्येकत्र स्वरूपसाक्षात्कारिणि प्रत्यक्षेऽविश्वासः [71a.1] कथमन्यत्र बाधके

स्वरूपान्तरप्रकाश एव निर्वृत्तिस्तत्पूर्वकमनुमानं च सुतरामविश्वासभाजनमिति न बाधक-वार्तापि । यथाहुर्गुरवः

यस्य स्वरूपनिर्भासस्तस्यैवासत्कथं भवेत् ।
बाधातो यदि साप्येका प्रत्यक्षानुमयोर्न तु ॥
प्रत्यक्षे यद्यविश्वास एकत्रान्यत्र का गतिः ।
तत्पूर्वमनुमानं च कथमाश्वासगोचरे ॥ इति ।

ननु

दृष्टमेव द्विचन्द्रादिप्रतिभासेऽपि बाधितम् ।
न दृष्टऽनुपपन्नत्वं तज्ज्ञातमपि बाध्यते ॥

इति चेत् । न । बाध्यस्याप्रतिभासनात् । प्रतिभासिनश्चाबाध्यत्वात् । तथा हि ।

बुद्ध्याकारस्य निर्भासो बाधा बाह्यस्य वस्तुनः ।
स्फूर्तावप्यविश्वासे क्व विश्वास इति कीर्तितम् ॥

एतेन भासमानो वा आकारोऽसन्निति द्वितीयोऽपि पक्षः प्रतिक्षिप्तः । प्रतिभासादेव सत्तासिद्धेर्बाधकावकाशाभावात् ।

तथा सन् वा कश्चिन्न [3] ख्यातीति तृतीयसङ्कल्पोऽपि व्याकुलः । प्रकाश-व्याप्तत्वात् सत्तायाः । अप्रकाशस्यासत्तया ग्रस्तत्वात् ।

ननु प्रकाशो नाम वस्तुनः सत्तासाधकं प्रमाणम् । न च प्रमाणनिवृत्तावर्था-भावः । अर्थक्रियाशक्तिस्तु सत्त्वम् । तच्चाप्रकाशस्यापि न विरुध्यत इति चेत् । सत्यमेतत् । बहिरर्थवादेऽप्रकाशस्यापि सामर्थ्याभ्युपगमात् । केशोण्डूकादिप्रतिभा[4]से-ऽध्यवसितस्यार्थक्रियाशक्तिवियोगादेवाभावसिद्धेः । सर्वथा बहिरभावे तु ज्ञानस्य प्रकाशा-व्यभिचारात्तावतैव सत्त्वे किमर्थक्रियया ।

कथमन्यद्भवः सत्त्वं प्रकाशादेव नास्य चेत् ।
नार्थक्रियापि सर्वस्मै क्वचिच्चेद् भासनं न किम् ॥

इति । निर्विकल्पे तावत् स्वसंवेदनसिद्धस्वाकारमन्तरेण विषयादयो न परिस्फुरन्ति । अथामी विकल्पे [5[प्रतिभासन्त इति द्वितीयः सङ्कल्पोऽभ्युपगम्यतेऽस्मिन्नपि पक्षे प्रति-भासमान आकारोऽसाधारणोऽशब्दसंसृष्टतया स्वसंवेदनतादात्म्ये प्रविष्टत्वाद्वस्तुसन्नेव ।

अध्यवसेयतया विषयादयो गृह्यन्त इति चेत् । तदापि तेषां स्वरूपस्य निर्भासो-ऽस्ति न वा । निर्भासे प्रत्यक्षसिद्धतैव । नासत्ख्यातिः । शास्त्रेऽपि ।

'स्वरूपसाक्षात्कारित्वमेव प्रत्य[6]क्षत्वम्'

उक्तम् । तस्य चेतरप्रत्यक्षेष्विव विकल्पेऽपि स्वीकारे विरुद्धव्याप्तोपलम्भेन विकल्पभ्रान्तत्वयोर्दूरमपास्तत्वाद्विकल्पेऽपि स्वन्मते प्रत्यक्षत्वमक्षतम्, तत् कथं तत्सिद्धस्य प्रत्यक्षान्तरानुमानाभ्यां बाधाभिधानम् । तयोरपि स्वरूपान्तरप्रकाशपौरुषत्वात् ।

अथ विकल्पभ्रान्तत्वयोर्व्याप्तिविरुद्धयोः सम्भवात् विकल्पे प्रत्यक्षत्वमेवासम्भवि । नत्वस्याप्रत्यक्षत्वम[71b.1]सम्भवीति स्वरूपसाक्षात्कारित्वमसम्भवीत्युक्तम् । अथ विपक्षादिरर्थोऽस्मिन् प्रकाशत इति वाचा स्वरूपसाक्षात्कारित्वं कथितमिति माता मे वन्ध्येतिवृत्तान्तः । इष्यते च त्वया विपक्षादिस्वरूपसाक्षात्कारित्वं विकल्पस्येति प्रत्यक्षता-नतिक्रमः । अप्रत्यक्षत्वे वस्तुस्वरूपस्फुरणायोगात् । ततश्च प्रतिभासिनोऽपि रूपस्य सत एव ख्यातिर्नासत्ख्यातिः । न च तदेव विकल्पे परिस्फुरद्रूपम[2]सतामीश्वरा-दीनां स्वरूपम् । असत्त्वस्यैवाभावप्रसङ्गात् । स्वरूपोपस्फुरणेऽप्यसत्त्वेऽन्यत्रापि प्रकाशिन्यनाश्वासात् ।

ततो यत् साकारवादे जल्पितम् ।

नित्यादयः सन्त एव स्युः ।

इति तदात्मन एव पतितम् । यदाहुर्गुरवः

स्वरूपसाक्षात्करणादध्यक्षत्वं न वापरम् ।
विकल्पभ्रमभूमित्वमत एव हि बाधितम् ॥
यदि नाध्यक्षता तस्य रूपनिर्भास एव न ।
ततस्तद[3]सदीशादि प्रतिभातीत्यसङ्गतम् ॥
यदि तु प्रतिभासेत रूपमस्य सदेव तत् ।
तदसत्प्रतिभातीति तच्च भात्यसदेव वः ॥

अथाध्यवसायेऽध्यवसेयस्वरूपप्रतिभासो नास्तीत्युच्यते । न तदा कस्यचिद-ध्यवसायः । कथमतः प्रतिनियतवस्तुव्यवस्थासिद्धिः । किञ्च कोऽयमध्यवसायो नाम । किं व्यावृत्तिभेदपरिकल्पितस्य प्रकाशांशस्य, स्वाकारां[4]शस्य, अलीका-कारस्य, बाह्यवस्तुनोऽवस्तुनो वा स्फुरणमध्यवसायार्थः । यदि वा स्वाकारे बाह्या-रोपो, बाह्ये वा स्वाकारारोपः, स्वाकारबाह्ययोर्योजना, तयोरेकीकरणमेकप्रतिपत्तिर-भेदेन प्रतिपत्तिः, भेदाग्रहोऽध्यवसायार्थ इति विकल्पाः ।

तत्र न तावदादिमौ पक्षौ कल्पनामर्हतः । स्वरूपे सर्वस्यैव स्फुरणस्य निर्वि-कल्पकत्वादध्यवसा[5]यानुपपत्तिः । इतरथा निर्विकल्पकज्ञानाभावप्रसङ्गात् ।

अलीकस्फुरणं तु प्राक् प्रत्याख्यातम् । सत्यपि स्फुरणेऽस्फुटत्वान्निर्विकल्पक-मेतत् । द्विचन्द्रादिज्ञानवत् । अस्तु स्वग्राह्ये निर्विकल्पकम् । बाह्ये तु अध्य-वसेये त्वध्यवसाय इति चेत् । न । तत्सम्बन्धाभावात् । तदप्रतिभासाच्च । अन्यथा-ऽतिप्रसङ्गादित्युक्तप्रायम् । बाह्यवस्तुस्वरूपस्फुरणे तु प्रत्यक्षप्रतिपत्तिरेवासा[6]विति कोऽध्यवसायः । अवस्तुस्फुरणं पुनरलीकता विकल्पस्य प्रागेव प्रत्याख्यातम् ।

स्वाकारे तु बाह्यारोपो न सम्भवत्येव । तथा हि ज्ञानं केनचिदाकारेण सत्येनालीकेन बोधजातं नाम । बाह्यारोपस्तु तदाकारे तत्कृतोऽन्यकृतो वा स्यात् । तत्कृतत्वेन तावत् तत्काल एव व्यापारान्तरमनुभूयत इति कुतस्तदारोपः । कालान्तरे च स्वयमेवासत् कस्य व्यापारः स्यात् ।

द्वितीयपक्षे ज्ञा[72a.1]नान्तरमपि नाकारारोपरागसङ्गिनीमुत्पत्तिमन्तरेण व्यापारान्तरेण क्वचित् किञ्चित्करं नाम । तदेतदर्वाचीनज्ञानसदृशाकारगोचरीकरणेऽपि न बाह्यारोपव्यापारमपरं स्पृशति तदाकारलेशानुकारमपहाय । न च शब्दामुखीकरणमतिरिक्तो व्यापारः । शब्दाकारस्यापि स्वरूप एवान्तर्भावादिति नाकारादन्यो ज्ञानव्यापारः । आरोप्यमाणश्चासावर्थो बाह्यः । तत्र बुद्धौ यदि [2] स्वरूपेण स्फुरति सत्यप्रतीतिरेवासौ । क आरोपः । अथ न परिस्फुरति तथापि क आरोपः । स्फुरणे वा अधिकरणभूतस्वाकारातिरिक्तस्यारोप्यमाणाकारस्यापि प्रतिभासप्रसङ्गः ।

तदाकारस्फुरणमेव तस्य स्फुरणमिति चेत् । न । तस्यारोपविषयत्वात् । नहि मरीचिस्फुरणमेव जलस्फुरणमिति न स्वाकारे बाह्यारोपः । अतएव बाह्ये स्वाकारारो[3]पो नास्ति, आरोपविषयस्य बाह्यस्यास्फुरणात् । तत एव स्वाकारबाह्ययोर्योजनाप्यसम्भविनी । योग्ययोरप्रतिभासात् । न चैकीकरणमध्यवसायः । कोऽयमेकीकरणार्थः । यद्येकतापत्तौ प्रयोजकत्वं तदारोप्यारोपविषययोः कदाचिदेकीभावाभावादसम्भव एव । नहि शशविषाणे कारणं किञ्चित् । न च पूर्वमनेकमेकतामेतीति क्ष[4]णिकवादिनः साम्प्रतम् । अर्थान्तरोत्पत्तिमात्रं तु स्यात् । न च तदुपलब्धिगोचरोऽन्यत्रारोपविषयात् स्वाकारात् । न च तावताप्यर्थस्य किञ्चिदिति कथमेकीकरणम् ।

अथैकप्रतीतिरध्यवसायः । तथापि न द्वयोरेकप्रतिपत्तिरध्यवसेयानुभवाभावात् । न च द्वयोः प्रतीतिरित्येवाध्यवसायः । नीलपीतवत् ।

न चाभेदेन प्रतीतिरध्यवसायः । य[5]तः पर्युदासपक्षे ऐक्यप्रतीतिरुक्ता भवति । सा च प्रत्युक्ता । अध्यवसेयप्रतिपत्त्यभावात् । भेदेन प्रतीतिनिषेधमात्रेऽपि न बाह्यस्य प्रतीतिरुक्तेति कुतस्तदध्यवसायः । यदि हि बाह्यं प्रकाशेत एकत्वेनानेकत्वेन वा सता असता वा प्रतीतिरिति युक्तम् ।

सर्वाकारतत्स्वरूपतिरस्कारेण सा प्रतीतिरित्येकप्रतीतिरिति चेत् । तत्स्वरूपतिरस्कारे तर्हि तदप्र[6]तिभासनमेव । कस्यचिदंशस्य प्रतिभासनादिति चेत् । न । निरंशत्वाद्वस्तुनः । सर्वात्मना प्रतिभासोऽप्रतिभासो वेति शास्त्रमेवात्र विस्तरेण परीक्ष्यते ।

न च भेदाग्रहोऽध्यवसायो वक्तव्यः । तथा हि किं बाह्ये गृह्यमाणेऽगृह्यमाणे वा । न च प्रथमः पक्षः । बाह्यग्रहणस्य प्रतिक्षिप्तत्वात् । ग्रहणे वाऽध्यवसायस्य प्रत्यक्षताप्रसङ्गात् । अगृह्यमाणे तु बाह्ये प्रवृत्तिनियमो न स्या[72b.1]त् । अन्येषामपि तदानीमग्रहणादन्यत्रापि प्रवृत्तिप्रसङ्गात् ।

त्रिलोचनोपीत्थमध्यवसायं दूषयति । कोऽयमध्यवसायः । किं ग्रहणमाहोस्वित् करणमुत योजना । अथ समारोपः । तत्र स्वाभासमनर्थमर्थं कथं गृह्णीयात् । कुर्याद् वा विकल्पः । नहि नीलं पीतं शक्यं ग्रहीतुं कर्तुं वा शिल्पकुशलेनापि । नाप्यगृहीतेन स्वलक्षणेन स्वाकारं योजयितुमर्हति विकल्पः । न च स्वलक्षणं वि[2]कल्पग्रहणगोचरः । न च स्वाकारमनर्थमर्थमारोपयति । न तावदगृहीतः स्वाकारः शक्य आरोपयितुमिति तद्ग्रहणमेषितव्यम् । तत्र किं गृहीत्वा आरोपयति, अथ यदैव स्वाकारं गृह्णाति तदैवारोपयति । नाद्यः । नहि क्षणिकं विकल्पविज्ञानं क्रमवन्तौ ग्रहणसमारोपौ कर्तुमर्हति । उत्तरस्मिंस्तु कल्पेऽविकल्पस्वसंवेदनप्रत्यक्षा[3]-द्विकल्पाकारादहङ्कारास्पदादनहङ्कारास्पदः समारोप्यमाणो विकल्पेन स्वगोचरो न शक्योऽभिन्नः प्रतिपत्तुम् । नापि बाह्यस्वलक्षणकत्वेन शक्यः प्रतिपत्तुम् । विकल्पाकारे स्वलक्षणस्य बाह्यस्याप्रतिभासनादिति ॥

वाचस्पतिरपि अध्यवसायं प्रतिक्षिपति । अनर्थं स्वाभासमर्थमध्यवस्यतीति निर्वचनीयमेतत् । नन्वर्थं[4]मारोपयतीति किं विकल्पस्य स्वरूपानुभव एवारोपः, उत व्यापारान्तरं स्वरूपानुभवात् । न तावत् पूर्वः कल्पः । अनुभवसमारोपयोर्विकल्पाविकल्परूपतया प्रवकठिनवत्तादात्म्यानुपपत्तेः । व्यापारान्तरत्वे तु क्रमः समानकालता वा । न तावत् क्रमः । क्षणिकस्य विज्ञानस्य क्रमवद्व्यापारायोगात् । अक्षणिकवादिना-म[5]पि बुद्धिकर्मणोर्विरम्य व्यापारानुपपत्तेः न क्रमवद्व्यापारसम्भवः । अनुभवसमारोपौ समानकालाविति चेत् । भवतु समानकालत्वं केवलम् । आत्मा स्वभावस्थित एव वेद्यः, परभावेन वेदने स्वरूपवेदनानुपपत्तेः । तथा चात्मा ज्ञानस्य ग्राह्यग्राहकाकारोऽनुभूतोऽर्थवद् समारोपितः । न ह्यात्मा वेद्यमानः समारोपितो ना[6]र्थसमारोप्यमाणः प्रत्यक्षवेद्यः स च समारोपः सतोऽसतो वा ग्रहणमेव । न च ज्ञानातिरिक्तस्य ग्रहणं सम्भवतीत्युपपादितम् ।

स्वप्रतिभासस्य बाह्याद्भेदाग्रहो बाह्यसमारोपस्ततो बाह्ये वृत्तिरिति चेत् । स किं गृह्यमाणे बाह्ये न वा । न तावद् गृह्यमाणे । उक्तं ह्येतन्न तद्ग्रहणं सम्भवतीति । अगृह्यमाणे तु भेदाग्रहेण प्रवृत्तिनियमः स्यात् । अन्येषाम [73a.1]पि तदानीमग्रहादन्यत्रापि प्रवृत्तिप्रसङ्गादिति । तस्माद् यथा यथायमध्यवसायश्चिन्त्यते तथा तथा विशीर्यत एव । तथा विकल्पारोपाभिमानग्रहनिश्चयादयोऽप्यध्यवसायवत् स्वाकारपर्यवसिता एव स्फुरन्तो बाह्यस्य वार्तामात्रमपि न जानन्तीत्यध्यवसायस्वभावा एव । शब्दप्रवृत्तिनिमित्तभेदेऽपि, तत्कथं युक्त्यागम[1]बहिर्भूतोऽनात्मस्फुरणमाचक्षीत ।

नन्वेवं विकल्पादीनाम[2]सम्भवे सम्भवेऽप्यनात्मप्रकाशकत्वानभ्युपगमे सर्वजनप्रसिद्धविधिप्रतिषेधव्यवहारोच्छेदप्रसङ्ग इति लोकविरोधः । विकल्प इत्यध्यवसाय इत्यारोप इत्यभिमान इति ग्रह इति निश्चय इत्यादिकं शास्त्रे प्रतिपदं प्रतिपादितम् । तत्सिद्धञ्च —

1. गमा Ms. 2. सम्भवे seems to be crossed after सम्भवे Ms.

बहिरर्थाविकमभ्युपगतमित्यानायंविरोधः । न्यायविरोधश्च । तथा हि सर्वैरेव प्रकारैरविप[3]री[1]तार्थस्वरूपसंवेदनाद् भ्रान्तेरत्यन्तमभावः स्यात् । ततश्च सर्वसत्त्वाः सर्वे सम्यक्सम्बुद्धा भवेयुः ।

विकल्पिका बुद्धिर्भ्रान्तिः स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायादिति चेत् । कथमवसीयमानस्तया सोऽर्थो न प्रकाशते । प्रकाशमानो वा कथमसौ तस्यां न प्रकाशते । अथ प्रकाशत एव । तदार्थस्य तादात्म्यप्रसङ्गः । असति चार्थे सार[4]स्यात् । अभून्मान्धाता, भविष्यति शङ्खोऽस्त्यात्मा, नित्यः शब्द इति सर्वात्मना च निश्चयः स्यात् । गौरिति स्पष्टेन च स्वेन लक्षणेन प्रकाशेत । स्वलक्षणे च सङ्केतायोगात् विकल्पिकैव सा बुद्धिर्न स्यात् । तस्मादशेषगोव्यक्तिसाधारणेन गोत्वेन गोबुद्धिरलीकैव साभिलापेन विप्लवात् प्रख्यातीति तथा प्रकाशनमस्या गवार्थावसा[5]य इत्येष्टव्यम् । एवं ह्येते दोषा न स्युः । अप्रतिभासमानस्यापि स्वलक्षणस्य •भ्रान्त्यावसायादिति ।

अत्राभिधीयते । न तावल्लोकशास्त्रविरोधौ अगृहीतेऽपि बाह्ये प्रवृत्तिनिवृत्त्यादिसमर्थनात् । स्वपरवादिदुरतिक्रमाध्यवसायस्वरूपनिर्वचनात् । न्यायविरोधस्य तु गन्धोऽपि नास्ति ।

तथा हि । का पुनरियं भ्रान्तिरसत्ख्यातिरतस्मिंस्तद्ग्रहो वा [6] यदभावादिदानीमेव मुक्तिरासज्यते ।

न तावदाद्यः पक्षः । असत्ख्यातेः प्रत्याख्यानात् । यदाहुर्गुरवः ।

यस्य स्वरूपनिर्भासो बाधकाद् यदि तन्न सत् ।
बाधके [च] क आश्वासः स्वरूपान्तरभासिनि ॥
अन्यस्वरूपोपनयात् तत्स्वरूपनिवारणम् ।
तत्रापि संशयो जातः पूर्वबाधोपलक्षितः ॥
इयमेवाग्रहे बाधा नाक्षजस्य परा यदि ।
अस्य पूर्वैव भवतु रूपनिर्भासनं समम् ॥
[173b 1] नान्यावभासिनीत्यत्र प्रमाणं किञ्चिदस्ति वः ।
अपि स्वरूपनिर्भासे यदा बाधकसम्भवः ॥
अनिर्भासे स्वरूपस्य हेतुशोधनविप्लवे ।
बाधशङ्काविनिर्भासेऽप्येवं चेद् विप्लवो महान् । इति ।

शास्त्रे च

अतस्मिंस्तद्ग्रहणात् स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायाद् दृश्यविकल्पयोरेकीकरणाद् भ्रान्तिरुक्ता । तामयं समर्थयितुमसमर्थः,

1. One syllable added after °विपरी but it is not legible.

'स्वातन्त्र्येणालीकस्फुरणं भ्रान्तिः' इति काव्यं विरचय्य विस्तारयति ।

नन्वतस्मिंस्तद्ग्रहेऽपि भ्रमः स्वाकारपर्यवसितज्ञानादतिरिक्तो बहुभिर्बहुधा विचार्य प्रत्याख्यातः । तत्कथं तस्मिन्नपि पक्षे न भ्रान्तिक्षतिर्येनेदानीमेव मुक्तिप्रसङ्गो न स्यादिति चेत् ।

तदेतद् भगवतो भाष्यकारस्य मतविद्वेषविषव्याकुलविक्रोशितमतिकातरयति कृपापरवशधियः । तथा हि । समनन्तरप्रत्ययबलायातस्वप्रतिभास[3]विशेषवेदनमात्राद-गृहीतेऽपि परत्र प्रवृत्त्याक्षेपोऽध्यवसायः । न चासौ पूर्वोक्तवाग्जालैः प्रतिहन्तुं शक्यः । सर्वप्राणभृतां प्रत्यात्मविदितत्वात् । कैश्चिदप्यनुद्भिन्नत्वात् । अयमेव च संसारस्तत्-क्षयो मोक्ष इति क्वेदानीमेव तद्वार्ताऽपि । तथा हि । विचित्रानादिवासनावशात् प्रबोधकप्रत्ययविशेषापेक्षया विकल्पः केन[4]चिदाकारेणोपजायमान एव बहिर्मुख-प्रवृत्त्यनुकूलमर्थक्रियास्मरणाभिलाषादिप्रबन्धमाधत्ते । ततः पुरुषार्थक्रियार्थिनो बहि-रर्थानुरूपाणि प्रवृत्तिनिवृत्त्यवधारणानि भवन्ति । पृथग्जनसन्तानज्ञानक्षणानां तादृशो हेतुफलभावस्य नियतत्वात् । अनिश्चितार्थसम्बन्धविकल्पकालेऽपि सदसत्तानिर्णयादि-प्रवृत्तिप्रसवः । [5] तत्र यदुभयथा प्रवृत्तिसाधनसामर्थ्यमस्य स्वहेतुबलायातमयमेव प्रवृत्तिविषयत्वारोपोऽध्यवसायापरनामा । यथा चन्द्रादिज्ञानस्य भ्रान्तस्याभ्रान्तस्य वा तद्दर्शनावसायजननमेव ग्रहणव्यापारः ।

स्वविषयेयमर्थविदेव कार्यतो द्रष्टव्येति

न्यायात् । तथा विकल्पस्याप्यग्निरत्रेत्यादिनाकारेणोत्पद्यमानस्य प्रवृत्त्याक्ष[6]पकत्वमेव बाह्यावसानं नाम । यथा च निर्विकल्पद्विचन्द्राद्याकारतैव तथावसायसाधनी, एव-मवसायस्यापि तादृशाकारतैव विषयान्तरविमुखप्रवृत्तिसाधनी ।

ननु तथा च तच्च तेन प्रतिपाद्यते न च तज्ज्ञाने तत् प्रकाशत इति शपथेनापि न सम्प्रत्यय इति चेत् । असम्बद्धमेतत् । न ह्यध्यवसायाद् बाह्यस्य पटादेर्वस्तुनो बाधकावतारात् पूर्वसन्दिग्धव[74a.1]स्तुभावस्य क्षणिकादेरवस्तुनो वा शशविषाणादेरस्फुरणेऽपि सिद्धिप्रतिबन्धो ब्रह्मणापि प्रतिविधातुं शक्यः ।

द्विविधो हि विषयव्यवहारः, प्रतिभासादध्यवसायाच्च । तदिह प्रतिभासा-भावेऽपि परापोढस्वलक्षणादेरध्यवसायमात्रेण विषयत्वमुक्तम् । सर्वथा निर्विषयत्वे प्रवृत्तिनिवृत्त्यादिसकलव्यवहारोच्छेदप्रसङ्गात् । ततश्च तेन च तत् प्रतिपाद्यते न च ज्ञाने [2]तत्प्रकाश इति सङ्गतिरस्त्येव । प्रकाश्यप्रकाशकभावाभावेऽप्यध्यवसेया-ध्यवसायकभावेनापि विषयविषयिभावोपपत्तः ।

ननु यदि नाध्यवसेयप्रतीतिस्तदा गृहीतेऽपि स्वलक्षणादौ प्रवृत्तिरिति सर्वत्राविशेषण प्रसज्येत, सर्वत्रागृहीतत्वेन विशेषाभावात्, ततश्च प्राप्तिरपि नाभिमतस्य नियमेनेत्यनुमानमपि विप्लुतम् ।

[3] अत्र ब्रूमः । यद्यध्यवसेयमगृहीतं विश्वमप्यगृहीतम् । तथापि नियतविषयैव प्रवृत्तिर्न सर्वत्र तथाभूतसमनन्तरप्रत्ययबलायातनियताकारतया नियतशक्तित्वाद्विकल्पस्य । नियतशक्तयो भावा हि प्रमाणपरिनिष्ठितस्वभावाः, न शक्तिसाङ्कर्यपर्यनुयोगभाजः । असदुत्पत्तिवत् । सर्वत्रासत्त्वेऽपि हि बीजादङ्कुरस्यैवोत्पत्तिः । [4] तत्रैव तस्य शक्तेः प्रमाणेन निरूपणात् । तथेहापि हुतवहाकारस्य विकल्पस्य दाहपाकाद्यर्थक्रियार्थिनस्तत्स्मरणवतो हुतवहविषयायामेव प्रवृत्तौ सामर्थ्यं प्रमाणप्रतीतं कथमतिप्रसङ्गभागि । प्रत्यासत्तिचिन्तायां च तात्त्विकस्यापि वह्नेर्ज्वलद्भास्वराकारत्वं विकल्पोल्लिखितस्यापीति, तावता तत्रैव प्रवर्तनशक्तिर्ज्वलनवि[5]कल्पस्य न जलादौ ।

ननु च सादृश्यारोपेण किं स्वाकारस्य बाह्ये स्वाकारे वा बाह्यस्यारोपः । उभयथाप्यसङ्गतिः । आरोप्यारोपविषययोः स्वाकारबाह्ययोर्द्वयोर्ग्रहणासम्भवादिति चेत् ।

न वयमारोपेण प्रवृत्तिं ब्रूमः । किं तर्हि । स्ववासनापरिपाकवशादुपजायमानैव सा बुद्धिरपश्यन्त्यपि बाह्यं बाह्ये प्रवृत्तिमातनोतीति विप्लु[6]तैव सं[स्का]रात्मिका च । यत् शास्त्रं

न ज्ञाने तुल्यमुत्पत्तितो धियस्तथा विभागः

इति । तस्मान्न रूप्यादिवदारोपद्वारेण प्रवृत्तिरपि तु तथाविधाकारोत्पत्तिप्रतिबद्धशक्तिनियमात् । न च विचारकस्य वस्तुदर्शननिश्चयादप्रवृत्तिः सङ्गच्छते । दर्शनेऽपि हि प्रवृत्तिरर्थक्रियार्थितया । अर्थक्रियाप्राप्तिश्च वस्तुसत्त्वनियमे । स च नियमो यथादर्शनाद् वस्तुप्रतिबन्धकृतः, तथा वि[74b.1]कल्पविशेषादपि पारम्पर्येण वस्तुप्रतिबन्धकृत इत्यदर्शनेऽपि अध्यवसायात् प्रवृत्तिर्युज्यत इति नानुमानमनवस्थितम् । एतेन तच्च न प्रतीयते, न चाभेदाभासनमित्युपालम्भो सम्भवीत्युपदर्शितम् । अप्रतिभासेऽपि प्रवृत्तिविषयीकरणमित्यभेदादिनिष्ठाया दर्शितत्वात् । तस्मादविचाररमणीयोऽतस्मिंस्तद्ग्रह एव भ्रान्तिरारोपापरनामा । तत्क्षयश्च मोक्ष इति युक्तम् ।

यदाहुर्गुरवः ।

तस्मात्प्रवृत्तेराक्षेपो विकल्पाकारजन्मनि ।
मतो जलाद्यारोपोऽपि सत्यासत्यसमश्च सः ।।
ततो यद्यपि तत्त्वेन नारोपो नाम कस्यचित् ।
व्यवहारकृतस्त्वेष प्रतिषेद्धुं न शक्यते ।।
मरीचौ जलवद् यावदनात्मन्यात्मकल्पनम् ।
भ्रम एव हि ससारो निर्वाणं तत्त्वसंस्थितिः ।।
ततश्च यावन्न विचारसम्भवो
भवोऽयमन्य[3]त्र स इत्ययं नयः ।
विचारलीलाललिते तु मानसे
भवः शमो वा क इहेति कथ्यताम् ।।

तथा चार्यमैत्रेयनाथपादा अपि ।

न चान्तरं किंचन विद्यतेऽनयोः
सदर्थवृत्त्या शमजन्मनोरिह ।
तथापि जन्मक्षयतो विधीयते
शमस्य लाभः शुभकर्मकारिणाम् ॥

आर्यनागार्जुनपादाश्च

निर्वाणं च भवश्चैव द्वयमेव न विद्यते ।
परिज्ञानं भवस्यैव [4]निर्वाणमिति कथ्यते ॥

इति सर्वैरेव प्रकारैरविपरीतस्वरूपसंवेदनेऽपि भ्रान्तिव्यवस्थासम्भवादस्ति संसारः ।

यदप्युक्तं विकल्पस्याविषयश्च बाह्यम् ग्रहणं चास्य शब्देन संयोज्येति विकल्पत्वमपि दुर्योज्यम् । आत्मनि च शब्दयोजनास्तीति विकल्पो नाम नास्त्येव । तत्कस्य विकल्पचिन्तेति ।

अत्राभिधीयते । इहाग्निरत्रेत्यध्यवसायो यथा [5]कायिकीं वृत्तिं प्रसूयते तथाग्निर्मया प्रतीयत इति वाचिकीमपि प्रसूयते । एतदाकारानुव्यवसायरूपां मानसीमपि प्रसवति । एवं च सति यथा विकल्पेनायमर्थो गृहीत इति निश्चयः, तथा शब्देन संयोज्य गृहीत इत्यपि, अर्थाकारलेशवच्छब्दाकारस्यापि स्फुरणात् । तस्मादर्थग्रहाभिमानवान् मानवस्तावदभिधानसंयुक्तग्रहणाभिमानवानपीत्यवसायानुरोधादेव विकल्पव्यवस्था न तत्त्वतः । यदाहुर्गुरवः

न शब्दैः संसर्गः क्वचिदपि बहिर्वा मनसि वा
क्षणाकाराकीर्णः स्फुरति पुनरर्थाकृतिलवः ।
उभावप्याकारौ यदपि धिय एवाध्यवसिति–
र्विधत्ते तौ बाह्ये वचसि [च] विकल्पस्थितिरतः ॥
अभाने प्रतिभाने वा न चारोपोऽपि कस्यचित् ।
प्रतीत्योत्पादभेदेन व्यवस्थामात्रमीदृशम् ॥
निर्वि[75a.1]कल्पाद्विकल्पस्य भावे लेशानुकारिणः ।
सङ्केतकारिवचनाद् बुद्ध्याकारे विशेषिणि ॥
सङ्केतः कृत इत्यास्था तादृक् शब्दश्रुतौ पुनः ।
प्रवृत्त्याक्षेपबुद्ध्यात्मभावे वाच्यव्यवस्थितिः ॥

इति ।

तस्माद् वस्तु वा घटपटादि सन्दिग्धवस्तु वा साधकबाधकातिक्रान्तम्, अवस्तु वात्मदिक्कालाक्षणिकादिकमध्यवसितमिति, अप्रतिभासेऽपि प्रवृत्तिविषयीकृतमित्यर्थः । अयमेव चारोपैकीकरणाध्यव[2]सायाभेदग्रहादीनामर्थः सर्वत्र शास्त्रे बोद्धव्यः । तस्मादध्यवसायस्याकारविशेषयोगादगृहीतेऽपि प्रवर्तनयोग्यता नाम यो धर्मस्तया बाह्याध्यवसाययो-

ग्राह्यग्राहकभावश्चेत् संवृत्या दुष्परिहरः, तदा विषयिविषयभावोऽपि तद्वद् इत्यध्यवसायमात्रेण विषयविषयित्वमुक्तमिति युक्तम् । यदाह अलङ्कारकारः

कथं तद्विष[3]यत्वं तत्र प्रवर्तनादिति ।

एतेन यदुक्तम् । कथमवसीयमानस्तयात्मार्थो न प्रकाशत इत्यादि, तन्निरस्तम् । तदप्रकाशेऽपि तदध्यवसायस्य व्यवस्थापितत्वात् । असति चार्थे सा न स्यादित्यप्ययुक्तम्, आत्मादेरध्यवसेयस्य प्रतिभासप्रतिपक्षे बुद्ध्या सह तादात्म्याभावात् । न च सर्वाकारनिश्चयप्रसङ्गदोषः सङ्गतः । सर्वाकारनिश्चयो [4] हि सर्वेष्वाकारेषु प्रवृत्तिकारकत्वात्मा निरुक्तः, न चैकाकारोल्लेखिनो विकल्पस्याकारान्तरे प्रवर्तनशक्तिरनुभवविषय इति कुतः शब्दप्रमाणान्तरानपेक्षेति युक्तम्, तत्र निर्विकल्पकं स्पष्टप्रतिभासत्वाद् ग्राहकं व्यवस्थाप्यते । विकल्पस्तु स्पष्टैकग्रावृत्युल्लेखादारोपकादिव्यवहारभाजनम् । यथा च बाह्ये सति क्वचिद् भ्रमव्यवस्था [5] तथान्तर्नयेऽपि सर्वत्र । केवलं बहिर्मुखप्रवृत्त्यपेक्षया क्रियमाणो नात्मनि कश्चिद् भ्रम इत्युक्तं भवति । न च गोस्वलक्षणप्रकाशावकाशः, स्वाकारस्यैव स्फुरणात्, स्वलक्षणे च संकेतायोगात् । विकल्पिकैव न स्यादिति तु स्वरूपापेक्षया सिद्धसाधनम् । बाह्यापेक्षया त्वध्यवसायवद् विकल्पिकैव सा बुद्धिस्तथा । तस्मादशेषगोव्यक्तिसा[6]धारणेन गोत्वेन गोबुद्धिरलीकेन साभिलापेन विप्लवात् प्रख्यातीति । तथा प्रख्यानमस्यागवावसाय इत्येष्टव्यमित्यपि नेष्टव्यमेव । चरणमर्दनादिना प्रत्यवस्थानेऽपि युक्तिशास्त्रबहिर्भूतत्वादेतदभावेऽपि कथितदोषप्रध्वंसात् । न हि विकल्पबुद्धावलीकाकारस्फुरणमेव बाह्यस्याध्यवसाय इति काचिदर्थसङ्गतिः, अर्थस्येति सम्बन्धानुपपत्तेः । बुद्धे[75b.1]रक्रमाभावात् प्रत्यक्षतैव, कथमध्यवसायः । अप्रतिभासमानस्यापि स्वलक्षणस्य भ्रान्त्यावसायादिति तु न बुध्यामहे । अवसायेन हि तद्वित्तिस्पर्शो प्रतिभासः कोऽपरः । तद्वित्तावप्यस्पष्टत्वादध्यवसाय इत्यप्ययुक्तम्, तद्रूपवित्तावस्पष्टत्वस्यैवाभावात् ।

जातो नामाश्रयोऽन्योऽन्यश्चेतसां तस्य वस्तुनः ।
एकस्यैव कुतो रूपं भिन्नाकारावभासि यत्[1] ॥

इति आचार्यः स्मर्यताम् । न च तदा[2]सौ भ्रान्तिर्भवितुमर्हति । वस्तुस्वरूपस्यैव निर्भासात् ।

अलीकवृत्तेरिति चेत् । सैवास्तु बाह्यस्यास्फुरतोऽध्यवसायः कथं सैव स इति चेत् । अलीकमिदमिति विदुषो बाह्याध्यवसायव्यवस्थाऽभावात्, बाह्यास्फुरणात् तदप्रतिबद्धत्वाच्च । प्रतिबन्धेऽपि तस्येति स्यात्, न पुनस्तदध्यवसायः । तदस्फुरणस्फुरणयोरपि तदयोगादित्यलमतिनिर्ब[3]न्धेन । तदेवमप्रतिभासिनोऽपि विपक्षादध्यवसायमात्रसिद्धावेव व्यावृत्तो दोषत्रयनिर्मुक्तः प्रकाशमानतात्मको हेतुर्यावत्प्रकाशावधिज्ञानात्मकचित्राकारचक्रस्यैकत्वं साधयत्येव ॥

1. प्रमाणवार्तिकम् II. 235. Printed text reads तत् for यत् ।

यदाहुर्गुरवः

भासते यत्तदेकं तद्यथा चित्रे सिताकृतिः ।
भासते चाखिलं चित्रं पीतशीतसुखादिकम् ॥
नात्रासिद्धिः प्रकाशस्य चित्रे धर्मिणि [4]दर्शनात् ।
न च साध्यवियुक्तत्वं दृष्टान्तस्यापि दृश्यते ॥
एकैकाणुनिमग्नत्वात् संवित्तिर्न परस्परम् ।
न चैकाणुप्रकाशोऽस्ति स्थूलमेव स्फुरत्यतः ॥
बाह्याणूनां प्रतीभासो बुद्धिरेका स्थवीयसी ।
ज्ञानाणूनां क एकस्तु प्रतिभासो भविष्यति ॥
तस्मात् स्थूलतया व्याप्तो निर्भासस्तन्निवृत्तितः ।
निवर्तमानोऽनेकस्मादेकत्वे विनियम्यते ॥
यथा सजा[5]तीयमताद् भागाद्भेदनिराक्रिया ।
अनाभासप्रसङ्गेन विजातीयमतात् तथा ॥
तन्नास्तु साध्यो दृष्टान्तो न च शंकाविपर्यये ।
अतो निर्दोषतो हेतोश्चित्राद्वैतव्यवस्थितिः ॥

संग्रहश्लोकश्च ।

एकत्वेन यथाप्तिमानभिमतो भासस्तथा व्याप्यते
स्थौल्येनाप्यणुशो न हि क्वचिदिदं स्वप्नेऽपि निर्भासनम् ।
तेन प्रत्यणुभेदनेत्युपरतं तद्व्याप[6]कस्यात्ययादेकत्वेन परीतमाकृतिचयश्चायं विनिर्भासते ।

इति ।

ननु चात्र दृष्टान्तदार्ष्टान्तिकयोरुभयत्राप्येकत्वं प्रत्यक्षतोऽनुमानाच्च विरुद्धधर्माध्यासलक्षणात् प्रतिहतम्, तत् कथमनुमानादेकत्वसिद्धिरिति चेत् ।

उच्यते । यदेतत् प्रत्यक्षं तदसाधकमुपनीयते, तत् किं नीलादीनामनात्मभूतमात्मभूतं वा । प्रथमपक्षे, आस्तां तावदेषामतो भेदसिद्धिः, [76a.1] सत्तामात्रमपि न सिध्येत् । स हि नीलादिकोऽर्थो जडो विज्ञानान्तरात्माऽलीकस्वभावो वा स्वीकर्तव्यः । त्रिष्वपि पक्षेषु प्रकाश्यप्रकाशकभावाभावः । तथा हि, ज्ञानस्य प्रकाशकत्वं नाम किं विद्यमानत्वं व्यापारावेशो वा । प्रथमपक्षे सर्वसर्वदर्शित्वप्रसङ्गः सर्वपुरुषज्ञानविद्यमानतायाः सर्वं प्रत्यविशिष्टत्वात् । तथा नीलादिभिरपि ज्ञानस्य ग्रहणप्रसङ्गः, तेषामपि विद्यमानत्वलक्षणग्राहकत्वसम्भवात् ।

अथ ज्ञानत्वे सति विद्यमानत्वमिति सविशेषणं लक्षणमुच्यते । तत् किं नीलादीनां [1]अज्ञानत्वे कोशपानमायुष्मता कर्तव्यम्, येन सत्तामात्रेण समसमयं स्फुरतोर्विज्ञाननीलाद्योः प्रतिज्ञामात्रादेकस्य जडत्वालीकत्वबाध्यत्वाप्रकाशत्वादि व्यवस्थाप्यते ।

1. स्व added in the margin.

अथ द्वितीयस्तदा स किं व्यापारः प्रत्य[3]क्षस्यात्मा ज्ञानान्तरम्, अर्थस्यात्मार्थान्तरं वा स्यात् । प्रथमविकल्पे स्वात्मनि कारित्वविरोधः । द्वितीयपक्षे ज्ञानान्तरं यद्यन्यविषयम् अर्थस्य न किञ्चित् । तद्विषयत्वं चाद्यापि न सिद्धम् । तत्प्रत्यासत्तेरेव चिन्त्यमानत्वात् ।

तृतीये पुनः सङ्कल्पे नीलादिकं कृतमेव स्यात् न प्रकाशितम्, तैलवर्त्यादिभिरिव प्रदीपः । प्रकाशस्तु स्वयमेव । तथा च ज्ञानान्तरत्वात् सन्तानान्तरवदप्रतिभासप्रसङ्गः ।

चतुर्थे तु विकल्पे अर्थान्तरे कृते नीलादिकं तदवस्थमेव । न चानात्मप्रकाशनसामर्थ्यं ज्ञानस्य स्वीकर्तुमुचितम् । व्यापारवत् प्रकाशनस्याप्येवं निराकर्तव्यत्वात् । न चाग्निधूमयोः कार्यकारणभाव इव ज्ञानज्ञेययोरपि स्वाभाविको ग्राह्यग्राहकभावो [4]वक्तव्यः । प्रमाणसिद्धकार्यकारणभाववद् ग्राह्यग्राहकस्वरूपयोरद्यापि निर्वक्तुमशक्यत्वादिति क्व नीलादिवार्तापि यद्भेदसिद्धिप्रत्याशा प्रत्यक्षतः सम्पद्यते ।

अथात्मभूतं तत् प्रत्यक्षमिति द्वितीयः पक्षः । तदात्मस्वसंवेदनमेव भेदसाधकमभ्युपगतं भवेत् । तच्च यदि प्रत्याकारं भिन्नं तदा सर्वेषां स्वस्वरूपनिमग्नत्वा[6]च्चित्रप्रकाशप्रणाशप्रसङ्ग इत्युक्तम् ।

अथैतद्दोषभयात् सर्वेषामाकाराणामेकत्वमेव स्वभावभूतं स्वसंवेदनमिष्यते, तदैतदेव चित्राद्वैतं विज्ञानमुच्यते, यदनेकाभिमतानां सहोपलब्धानां नीलसुखाद्याकाराणां स्वभावभूताखण्डस्वसंवेदनप्रत्यक्षं नाम । यदाहुर्गुरवः ।

भ्रमाभ्रमाकल्पनकल्पनानि शाता[1]सिताद्रीन्याखिलाक्षजानि ।
ज्ञा[76b.1]नान्यभिन्नानि सहोपलब्धेः पूर्वापरत्वं तु न वेद्यमेव ।।इति।

तदेवं दृष्टान्तदार्ष्टान्तिकयोरुभयत्रापि स्वसंवेदनप्रत्यक्षसिद्धमेकत्वमविद्यावशाद् विप्रतिपत्तौ सत्यामनुमानतः साध्यते । अतएव स्वसंवेदनप्रत्यक्षादनुमानाच्च एकत्वसिद्धौ न प्रत्यक्षान्तरम् । नापि विरुद्धधर्माध्यासलक्षणमनुमानं भेदसाधनाय प्राप्तावसरम् । भेदग्राहकस्य भिन्नस्य प्रत्यक्षस्यो[2]क्तक्रमेणाप्रामाण्यात् । पक्षस्य प्रत्यक्षादिबाधितत्वात् ।

ननु ब्रूयान्नाम किञ्चित्, तथापि प्रतिभासभेदाद् भेद एव, न हि दृष्टेऽनुपपन्नं नामेति चेत् । हन्त प्रतिभासशब्देन किमभिप्रेतम्, किमाकारचक्रं स्फुरणं वा । तत्र यदि प्रथमः पक्षः । तदा बाह्योऽर्थे प्रत्येतव्ये बुद्ध्याकारः प्रमाणम् । तथाचाकारभेदो व्यवहर्तव्य एव । अन्यथा बाह्य[3]भेदो न सिध्येत् । यदा पुनराकारचक्रमेव प्रमेयम् स्वसंवेदनं च प्रमाणं तदा तेनैव नीलादीनां स्वभावभूतेनाखण्डात्मना एकीकृतानां कथमप्रमादो भेदमाचक्षीत ।

1. शाता marginal correction for साता ।

द्वितीयपक्षे तु स्फुरणं स्वभावभूताखण्डस्वसंवेदनमेवोक्तमिति । तथापि कथं भेदस्तस्माद् यथोर्ध्वमिन्द्रियप्रत्यक्षतः क्षणभेदे प्रतीतेऽप्यविद्याव[4]शादेकत्वाध्यवसायः । तथा तिर्यक्स्वसंवेदनप्रत्यक्षेणाकाराभेदेऽधिगतेऽप्यविद्यावशादेव भेदावसायः ।

यद्येवं विरुद्धधर्माध्यासतो विज्ञानाकारचक्रवद् व्याप्तोऽपि न भिद्यतेति चेत् । न, बाह्ये धर्मिण्येकत्वस्य साध्यस्य प्रत्यक्षाद्यबाधितत्वात् । बुद्ध्याकारकदम्बके तूक्तक्रमेण स्वसंवेदनादिसिद्धैकत्वेऽनेकत्व[5]स्य प्रत्याख्यानाद् बाधकावतार एव नास्ति । तस्माद् विज्ञानत्वे सतीति हेतुविशेषणं कर्तव्यम् । येन बाह्यस्यैव भेदः सिध्यति ।

ननु यदि विज्ञानात्मकं विचित्राकारचक्रमेकं तदा नीलाकार एव पीताद्याकारवृन्दं प्रविशेत् । तथा प्रकाशाकारचक्रयोरभेदो व्यक्तिसामान्यवत् प्रकाश एव, आकारचक्रमेव वा स्यादिति चेत् । असदेतत् । तथा हि द्वयोरप्यनयोः प्रसङ्गयोर्विपर्ययो भेदः, स च बाह्यार्थवाद एव युज्यते । तत्र भेदग्राहकस्येन्द्रियप्रत्यक्षस्येष्टत्वात् । विज्ञानवादे त्वनात्मप्रकाशाभावात् स्वसंवेदनमेवैकं प्रमाणम् । ततोऽपि विपर्ययस्य भेदस्य सिद्धेः प्रसङ्गोऽप्यसङ्गतः इत्यद्वैतमेव ।

किंच एवं स्थूलनीलाद्याकारोऽपि परमाणुमात्रे प्रविशेदित्यप्रतिभा[77a.1]सं जगदापद्येत । अस्ति च प्रतिभासः । तस्माद् यथावस्थितानामेवाकाराणामखण्डस्वसंवेदनात्मतैवैकत्वम्, न भेदो न संकोचः स्वीकर्तव्योऽप्रतिभासप्रसङ्गात् । तथा कृतकत्वस्यानित्यत्ववस्तुत्वादिभिरभेदे कृतकत्वमेवानित्यत्वमेव वा स्यादित्यपि प्रसङ्गो वक्तव्य आपद्येत, सामान्यव्यक्त्योरिव तयोर्वस्तुतोऽभेदोऽखण्डात्मत्वात् ।

व्यावृत्तिभेद एव परमिति चेत् । [2] यद्येवं प्रकाशनीलाद्योरप्ययमेव क्रमो जागर्तीत्येकावशेषप्रसङ्गो बालप्रलापः । तदेवं

बाह्यं न नश्यति भिदाणुतयापि सत्त्वा-
वर्थक्रियाविरहसंकरतात्मभेदे ।
बुद्धिस्तु नश्यति भिदैव विदैव सत्त्वा-
च्चित्राप्यतो न भिदमेति किमत्र कुर्मः ॥
ननु देशवितानाप्तिर्नात्मान्तरवियोगिनः ।
देशवितानहानौ न भास इत्य[3]पि शक्यते ॥

इति चेत् ।

नन्वात्मान्तरमन्यात्मा स बाह्यस्यैव युज्यते ।
बुद्धेः स्ववित्तिनिष्ठाया यः परस्तस्य का गतिः ॥

हन्त तथापि

नीलादिव[स्त]वेकं च कथमेतत् समेतु चेत् ।
नीलमंशान्तरं चैकं कथं तद्भाति सङ्गतम् ॥
नेष्टं तदपि चेत् तर्हि क्वाण्वन्तर्भिदि भासनम् ।
न परीक्षाक्षमं चाणुः कुतस्तस्य तदा भिदा ॥
मा भूदवस्तुभावाच्चेत् सो[4]ऽप्येकत्वहतौ भवेत् ।
निर्भासादेकतासिद्धौ स्ववित्तेर्वस्तुता स्थिता ॥
न प्रतीत्यसमुत्पादोऽनुत्पादो वास्य बाधकः ।
एकानेकवियोगेऽपि स्फूर्तिमात्रेण सत्त्वतः ॥
किं च पूर्वापरज्ञानमद्वैते यन्न विद्यते ।
प्रतीत्योत्पन्नता तस्मादसिद्धेरप्यसाधनम् ॥
अनुत्पादोऽप्यनेकान्तोऽकार्यकारणरूपकम् ।
हानेऽपि हेतुफलयोः स्फुर[5]द्रूपं क्व गच्छतु ॥
एकानेकतया वस्तुव्याप्तिः सिद्धा यदि क्वचित् ।
सर्वशून्यत्वसमयहेतुरिष्टविघातकृत् ॥
अथ लोकप्र[सि]द्ध्यैव न सर्वलोककल्पितम् ।
वस्तुव्यवस्था शरणं किन्तु मानेन सङ्गतम् ॥
न चाध्यक्षानुमानाभ्यामनङ्गं क्वचिदीक्षितम् ।
यस्य राशिरनेकं स्यान्नापि वस्तु च किञ्चन ॥
यस्य चैकतरत्वाभ्यां सत्त्वव्याप्तिः स हन्यताम् ।
अभ्रान्तधित्तिमात्रेण सत्तावादी तु जित्वरः ॥

समाप्तश्चित्राद्वैतप्रकाशवादोऽयम् ॥

ग्राह्यं न तस्य ग्रहणं [न] तेन ज्ञानान्तरग्राह्यतयापि शून्यः ।
तथापि च ज्ञानमयः प्रकाशः प्रत्यक्षपक्षस्तु तवाविरासीत् ॥

# सन्तानान्तरदूषणम्

[84b.1] अथेह प्रकाशसहोपलम्भादिसाधनबलेन जडपदार्थराशावपास्ते नीलपीताद्यशेषपदार्थजाते च स्वचित्तप्रतिभासात्मनि स्वप्नमायादिवद्वयरूपे सिद्धे सन्तानान्तरसदसत्तानिरूपणार्थमिदमारभ्यते।

एवं हि [2] केचिदाहुः। अस्त्येव सन्तानान्तरमनुमानप्रतीतम्। तथा हीच्छाचित्तसमनन्तरव्याहारव्यवहाराभ्यासस्य दर्शनात् तदभावे चादर्शनात्। उपलम्भानुपलम्भसाधनमन्वयव्यतिरेकशरीरमिच्छाचित्तेन सह व्याहाराद्याभासस्य कार्यकारणभावमात्मसन्तानेऽवधार्येच्छाचित्तस्याप्रतिसंवेदनसमयेऽपि विच्छिन्नव्याहाराद्याभासदर्शनात् तत्कारणभूतमि[3]च्छाचित्तमनुमीयमानं सन्तानान्तरमेव व्यवतिष्ठत इति।

अत्रेदमालोच्यते। तदिच्छाचित्तं व्यवहाराद्याभासस्य कारणतया व्यवस्थाप्यमानमनुमातुर्दर्शनयोग्यमथ दृश्यादृश्यविशेषणानपेक्षमिच्छामात्रम्। यदि तावदाद्यो विकल्पस्तदानुमातुर्दर्शनयोग्यत्वादिच्छाचित्तस्यानुमानकालेऽनुपलब्धिरभावमेव गमयतीत्यनुपलम्भाख्यप्रत्यक्षबाधितत्वा[4]त् क्वानुमानावकाशस्तस्य। यदि पुनरिच्छा[1]चित्तमनुमानकालेऽप्यनुभूयेत, तदा किमस्यानुमानेन। अथैवमग्निधूमयोस्तदुत्पत्तिसिद्ध्यनन्तरं नगनिकुञ्जे धूममुपलभमानो नाग्निमप्यनुमिनुयात्। तत्राप्यग्नेरनुपलब्धिबाधितत्वात्, उपलम्भे चानुमानवैफल्यात्। नैवम्। अनुमानसमये देशविप्रकर्षवतो वह्नेर्दर्शनायोग्यत्वेन दृश्यानुपलब्धिवि[5]रहात्। अदृश्यानुपलम्भस्य चाभावसाधनत्वविरोधात्। इच्छाचित्तस्य तु नास्ति देशविप्रकर्षः। इच्छाचित्तं हि स्वसम्बद्धमेवानुमातुर्दर्शनयोग्यम्, तस्य च देशादिविप्रकर्ष इत्यलौकिकमेतत्।

अथ द्वितीयो विकल्पः। तथा हीच्छाचित्तमात्रं स्वपर[2]सन्तानसाधारणदृश्यादृश्यविशेषानपेक्षं व्याहाराद्याभासं प्रति कारणतयावधार्यते। तदवधारणं केन प्र[6]माणेन। व्याहाराद्याभासस्य हीच्छाचित्तमात्राभावेऽभावं प्रतीत्य तदुत्पत्तिसिद्धिगवेषणा। न चेच्छामात्रस्य स्वपरसन्तानसाधारणस्य स्वसंवेदनेनान्येन वाऽभावः शक्यावगमः। यथा हि वह्निमात्रस्य देशकालव्यवहितस्यापि धूमोत्पाददेशकालयोर्यदि स्यादुपलभ्येतैव मयेति सम्भावितस्यानुमातृपुरुषेन्द्रियप्रत्यक्षेण धूमोत्पादात् प्रागभावोऽवधार्यमाणस्तदुत्पत्तिसिद्धिमध्या[85a. 1]सयतीति व्यवहितदेशकालस्यापि वह्नेर्धूममात्रं प्रति कारणत्वावधारणम्, स्वभावविप्रकृष्टस्य तु जठरभवादिसाधारणस्य सर्वथानुमातृपुरुषाशक्याभावप्रतीतिकस्य व्याप्तिबहिर्भाव एव। तथापीच्छाचित्तं परसन्तानसाधारणमपि यावद्यदीह स्यादुपलभ्येतैव मयेति यदि सम्भावयितुं शक्येत तदा तद्व्यतिरेकसिद्धिद्वारेण कारणतयावधार्यते। केवलस्वभावविप्रकृष्टे चित्तमात्रेऽ[2]स्तमितेयं कथेति।

1. यदियमरि Ms. 2. स्तपर Ms.

न च परचित्तं कालविप्रकृष्टं वर्तमानत्वादस्य। अतीतानागतयोरेव कालविप्रकृष्टत्वेन व्यवहारात्।

नापि देशविप्रकृष्टम्, यस्मिन्नेव हि शुक्लशंखादिदेशे स्वचित्तं शुक्लाकारप्रतिभासि स्वसंवेदनेन वेद्यते तद्देशवर्त्येव पीताकारप्रतिभासि परसन्तानभावि चित्तं न वेद्यते। तत् कथमेष देशविप्रकर्षः।

अथेच्छाचित्तमात्रं स्वसंवेदनमात्रापेक्षया न स्वभावविप्रकृष्टम्। न ह्यग्निरप्येको येनै-वेन्द्रियविज्ञानेन दृश्यते [1]तेनैवान्यापि दृश्यम्। तत्र यथा चक्षुर्विज्ञानमात्रापेक्षया अग्निमात्रं दृश्यमिति व्यवस्थाप्यते तथात्रापि स्वसंवेदनमात्रापेक्षया इच्छाचित्तमात्रं स्वपरसन्तानसाधा-रणमपि दृश्यमेवेति।

अत्रोच्यते। किमत्र मात्रशब्देनानुमातृपुरुषसम्बन्धासम्बन्धाभ्यामवि[4]शेषितं यस्य कस्यचित् पुरुषस्येन्द्रियज्ञानं वस्तुविषयीकुर्वाणमस्य दृश्यतासम्भावनेऽपि नानिमित्तमभिमतम्। यद्येवं पिशाचादिरपि दृश्यः स्यात्। सोऽपि हि कस्यचित् पुंसो योग्यादेः स्वजातीयस्य वा पिशाचान्तरस्य भवत्येवेन्द्रियज्ञानगोचर इति न कश्चित् स्वभावविप्रकृष्टः स्यात्। तस्मा-दनुमातृपुरुषसम्बन्धित्वमनपास्य विज्ञानस्य स्वलक्षणादिभे[5]दनिरासपर एव मात्रशब्दो युक्तः। एतदेवाशंक्य धर्मोत्तरेणाभिहितं।

एकप्रतिपत्रपेक्षञ्चेदं प्रत्यक्षलक्षणम्।

इत्यादि। तेनैवं दृश्यतासम्भावना—यदीह देशे काले वा स्याद् घटादिर्नियमेनोपलभ्येत, मदीयस्य चक्षुर्विज्ञानमात्रस्य विषयीभवेदिति। परचित्ते तु न शक्यमेवम्। यदीह परचित्तं स्यात् नियमेन मदीयस्य स्वसंवेद[न]मात्रस्य विष[6]यः स्यादिति।

यदि चेच्छाचित्तमात्रं तदुत्पत्तिग्रहणसमये दृश्यतया सम्भावयितव्यम्, तदानुमानकाले-ऽपि दृश्यतया सम्भाव्य तदनुपलम्भेनाभावसाधने कथमनुमानं प्रवर्तयितुमिदमारब्धम्, प्रत्य-क्षेणैव पक्षबाधात् न च कालभेदेन स्वभावविप्रकर्षेतरादिति यत्किञ्चिदेतत्। तस्मा-दिच्छाचित्तमात्रस्य स्वपरसन्तानसाधारणस्य दृश्यतया सम्भावयितुमशक्यत्वात् व्यवहाराद्यु-[85b.1]त्पादात् प्रागनुपलम्भेऽप्यभावसिद्धौ न तदभावप्रयुक्तो व्याहाराद्यभावः प्रतीयत इति कथं कारणत्वसिद्धिर्यतः कार्यहेतुद्वारेणानुमीयेत। इच्छाचित्तविशेषस्तु स्वसन्तानभावी न भवत्येवानुमातुर्दृश्यः। किन्तु तस्य दृश्यानुपलम्भाज्जिज्ञासितविशेषे धर्मिणि बाधितस्य कथमनुमानमित्युक्तमेव।

तदेवमिच्छाचित्तविशेषे स्वसन्तानभाविनि साध्ये पक्षस्य बाधः, इच्छाचित्तमात्रेऽपि [2] स्वपरसन्तानसाधारणे साध्ये यद्यनुपलम्भमात्रेण दृश्यविशेषणानपेक्षेण प्रतिबन्धसिद्धि-समये तदभावः प्रतीयते, तदा पक्षीकृते धर्मिणि तथेति स एव दोषः। अथ न प्रतीयते तदा सन्दिग्धव्यतिरेको हेत्वाभासो व्याहारादिरिति स्थितम्।

1. स्तोऽन्यो added ?

एवं तर्हि सन्तानान्तरसाधकस्याभावाद् बाधकस्यापि कस्यचिददर्शनाद्भवतु तत्र सन्देह एवेति केचित् । [3] [तदस्य] बाधकमभिधीयमानमवधीयताम् । यदि हि सन्तानान्तरं सम्भवेत् तदा ततो भेदेन स्वसन्तानस्यावश्यं भवितव्यम् । अन्यथा स्वसन्तानादपि प्रकाशमानात्तस्य परसन्तानाभिमतस्य भेदो न स्यात् । नचाभेदस्तयोरिति स्वसन्तानाद् भेदाभेदाभ्यामबाध्यस्य परसन्तानस्य सामान्यशशविषाणादिवदभाव एवायात इति कथं सन्देहः । [4] तस्मात् परसन्तानापेक्षया स्वसन्तानस्य भेदोऽप्यवश्यम्भाव्यः । स च भेदः सन्तानस्य स्वभावः स्वसन्ताने प्रतिभासमाने नियमेन प्रतिभासेत । कथमपरथा प्रतिभासाप्रतिभानलक्षणविरुद्धधर्माध्यासेऽपि स्वसन्तानस्य परसन्तानाद् भेदः स्वभावतामासादयेत् ।

न चासौ भेदः प्रतिभासते । भेदप्रतिभासे हि उपगम्यमाने तदवधिभूतस्यापि प[5]रसन्तानस्य प्रतिभासो दुरपह्नवः स्यात् ।

अस्माद्भिन्नमितीदं चेत् स्वरूपं स्वस्य चेतसः ।
[1]सावधेरस्य भासः स्यान्न वा ग्राह्यं तदात्मना ।।

[सा० सं]

भेदेऽन्यलेशमपि नैति कुतो भिन्नः ।

एवमादिकमशेषमिह प्रवचनप्रदीपश्रीसाकारसङ्ग्रहाविवचनमनुस्मर्यताम् । यथाहि स्वसन्तानमात्र परिस्फुरति शशविषाणादस्फुरतो न भेदः प्रतिभाति तथा [6] परसन्तानादपि स्फुरणविरहिणो न भात्येव भेदः । नहि परसन्तानापेक्षया कश्चिद् विशेषलेशः स्वसन्तानस्य परिस्फुरति यो नास्ति शशविषाणापेक्षया ।

न च शशविषाणपरसन्तानावपेक्ष्य समाने स्वसन्तानप्रतिभासे शशविषाणापेक्षया न भेदो नाप्यभेदः प्रतिभाति । परसन्तानापेक्षया तु भेद एव भातीत्येवमवस्थापयितुं शक्यम् । भेदाभेदयोरभेदपरिहा[86a.1]रेण हि यथा भेदो व्यवस्थितः तद्वद् भेदप्रतिभासोऽपि भेदाभेदाभावप्रतिभासविलक्षण एवोचितो भवितुम्, न च तथानुभूयते । तथापि भेदः प्रतिभातीति वचनरचन[2]मेतत् ।

भाष्यकारस्यायोऽप्यत्र भेदप्रति।स दूषणे विस्तरतोऽवगन्तव्यः ।

यदि सावधिप्रतिभासविरहेऽपि भेदप्रपिभानमिदं परचित्तानु[कम्पया][3] क्षमितव्यं [तर्हि] बहिरर्थस्यापि कथमभावः सिध्यति । शक्यं हि तत्रापि [२] सन्देहमवतारयितुम्, न बहिरर्थः कस्य चिदाभासते, परसन्तानस्तु परस्य प्रतिभासत एव, ततश्चात्रैव सन्देहो न बहिरर्थ इति चेत् । एतदपि सकलं सन्दिग्धमेव । न ह्यवश्यं परसन्तानः परस्यावभासते कदाचिदसौ नास्त्येव न चासाववभासत इत्यपि वक्तुं शक्तः ।

किञ्च मा नाम भासिष्ट बहिरर्थः कस्यचिदपि तथापि कथं तदभावसिद्धि[3]र्भेदप्रतिभासाभ्युपगमवादिन इतीयन्मात्रमिह विवक्षितम् । न चात्र कश्चिद् दोषः ।

---

1. सावधि Ms.   2. रचनामे° Ms.   3. क्रिया Ms.

तस्माद् बहिरर्थेन साधारणं सन्तानान्तरमिति कथं विज्ञप्तिवादिनामपि सम्मतं भविष्यति, किञ्च कार्यकारणभावोऽपि विज्ञानद्वयस्य भेदप्रतिभासवादिना बाधितुमशक्यः। पूर्वभाविनी हि संवित्तिः परसंवित्त्यपेक्षया भेदं पूर्वत्वं चात्मनो गृह्णात्येवावधिप्र[4]तिभासवतामधिगमेऽपि।

परभाविन्यपि संवित्तिः पूर्वसंवित्त्यपेक्षया भेदं परत्वं चात्मनोऽधिगच्छत्येव सन्तानान्तरवदिति नियतपूर्वापरभावलक्षणे कार्यकारणभावेऽवभासमानेऽवसीयमाने च नीलादिचित्ताकारवत् कथम्

संवृत्यास्तु यथा तथा (प्र०वा० II.4)

इति भगवतो वार्तिककारस्य वचनेन फलितमत्र मते।

अपि च चित्राकारचक्रे धर्मिण्यद्वैतसाध[5]नार्थमुपन्यस्य[1] प्रकाशमानत्वादिहेतोर्भेदग्राहकप्रत्यक्षापहृतविषयत्वमुद्भावयतः प्रतिवादिनो भेदग्रहणमनुमन्यमानेन सन्तानान्तरसन्देहं च विना कथमुत्तरीतव्यं भवता।

नन्वेवमपि सन्तानान्तराभावः केन प्रमानेन सिद्धः। न तावत् प्रत्यक्षेण। तस्य विधिविषयस्य प्रतिषेधसाधनानधिकारात्। नाप्यनुमानेन। तस्यादृश्या[6]भावसाधननियतस्यातीन्द्रियपरचित्ताभावसाधनेऽनवतारादिति चेत्।

अत्र ब्रूमः। सन्तानान्तरसम्भवे नियतभावः ततो भेदः स्वचित्तस्य। अभेदे स्वसन्तानात् परसन्तान एव स्यात्। यथा च यदुपलभ्यमानं येन रूपेणन भासते न तत् तेन रूपेण सद्व्यवहारयोग्यं यथा नीलं पीतरूपेण। नोपलभ्यते च स्वचित्तमुपलभ्यमानं परसन्तानाद् भिन्ने[न] रूपेणेति भेदस्य स्वचि[86b. 1]त्ततादात्म्यनिषेधे दृश्यविशेषणप्रयोगानपेक्षा स्वभावानुपलब्धिरियम्।

नाप्यसिद्धिः। भेदप्रतिभासे तदवधेरपि प्रतिभासप्राप्तेः अवध्यप्रतिभासे तु भेदप्रतिभासाभावः शशविषाणभेदप्रतिभासाभाववत् सिद्ध एव। एवमनेन प्रमाणेन सन्तानान्तरस्य स्वचित्तापेक्षया भेदे प्रतिक्षिप्ते अभेदे च स्वयमेवासम्भविनि भेदाभेदाभ्यामवाच्यत्वं सिद्धम्। सामान्यादिवद् वस्तु[2]तापहृतिरिति, कथं बाधकाभावात् सन्तानान्तरे सन्देहोऽभिधीयते। एतच्च शास्त्रीयप्रमेयस्मारणमात्रफलं किञ्चिल्लिखितमिति। परमिहस्वयमनुसन्धेयम्।

अपि च सन्तानान्तरे तावदर्वाग्दृशां [2]सन्देहो भवद्भिरनुमन्यते। भगवतस्तु किमवस्थाप्यताम्। सन्देहावस्थापने कथं सर्वज्ञता। विद्यमानमेव कदाचित् सन्तानान्तरं भगवता नावधार्यते तथाप्यसौ सर्वज्ञ इति कथमेतत्। अनुमानं च सन्तानान्तरविषयं प्रागेव चिन्तितम्। न चानुमानेन प्रतीतावपि सर्वज्ञता भवितुमर्हति। प्रत्यक्षेण परचित्तप्रतीतौ ग्राह्यग्राहकभावोऽपि परचित्तस्य भगवच्चित्तेन सहायात इति बहिरर्थवाद एव मुखान्तरेणोपगतः [4] स्यात्, कथमयं वञ्चयति वादः।

1. ॰न्यस्यस्य Ms.

2. The rest of the Ms. is written hurridly and is not legible at places.

अस्मदीयमते तु परचित्तं नास्त्येवेति तदनवधारणकृतो न भगवतः सर्वज्ञताक्षतिदोषः। अवश्य भेदग्रहणाभिमानरूपा संवृतिस्तावत् सन्तानान्तरे सन्देहासद्‌बोधनार्थं स्ववचनादि-रपि प्रवर्तत इति स्ववचनविरोधोऽपि न सम्भवत्येव। न खलु सन्तानान्तरविषयः [5] सर्वथा सन्देहो नास्त्येवेत्यभिमतमस्माकम्। अपि तु परमार्थगतिरियमुपदर्शिता। इदं हि सन्तानान्तराभावसाधनमद्वयसाधनेन साधारणमिति नैकनियतः स्ववचनादिविरोधस्तत्परि-हारो वा। चित्राकारसम्भवमात्रेणापि च वेदान्तध्वान्तापसारो भाष्यकारेण दर्शितः। तथा च

आत्मा स तस्यानुभवः स च नान्यस्य कस्यचित्

(प्र० वा० II.326)

इत्यादि [1]वार्तिक [6]व्याख्यानं [द्रष्टव्यम्]।

आत्मवादस्तर्हि प्रसक्त इति चेत्। न चित्राकारसंवेदनादित्यनादिद्वेषविकलुषा-शेषा एव तदाकारोऽपि वेदान्तसिद्धान्त इति [संवृतिः] तद्ग्रन्थानुत्थापयन्ती सन्तानान्तरा-पेक्षया पठित वतीत्यवस्था सर्वा संवृतिसत्यान्तःपातिनी ह्येवापैतीति सकलमनाकुलमिति।

सन्तानान्तरदूषणं समाप्तम्।

1. The last line begnining from व्याख्यानम् is mostly illegible.

# विशिष्टनामसूची

# अवतरणसूची

## अवतरणसूची

द्र: दीर्घगद्यावतरणानां कृते विशिष्टनामसूच्यनुसारं ग्रन्थभाग एवानुसन्धेयः ।

# विशिष्टशब्दसूची

# शुद्धिपत्रम्

| पृ | पं | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ९ | भूतमपरि | भूतसपरि |
| २ | १३ | नित्यहेतु | अनित्यहेतु |
| २ | २८ | मवस्थिम् | मवस्थितम् |
| २ | ३२ | चतस ''शय | चेतस ''शये |
| ३ | ९ | विशेषणसिद्धो | विशेषणासिद्धो |
| ३ | १३ | चते | चेतो |
| ३ | ३२ | धम ोः | धर्मयोः |
| ४ | ९ | प्रवृत्तर | प्रवृत्तेर |
| ४ | २५ | प्रवृत्तः | प्रवृत्तेः |
| ४ | २९ | युक्स्य | मुक्त्य |
| ४ | ३३ | वचोदर्शन | वचोऽदर्शन |
| ५ | ५ | तथावस | तथावस्थ |
| ५ | १५ | त्वमवा | त्वमेवा |
| ७ | २० | ग्रहणा | ग्रहणा[भावा]च्च |
| ७ | २७ | स्वार्थं | सर्वार्थं |
| ८ | ७ | जातीनरति | जातीरनति |
| १० | २५ | सहस्रणा | सहस्रेणा |
| १२ | ७ | भतार्थ | भूतार्थं |
| १२ | २७ | वशद्य | वैशद्ये |
| १३ | ३ | नानात्व | नानास्व |
| १३ | ९ | फलभताः | फलभूताः |
| १४ | ४ | यात् | स्यात् |
| १५ | ९ | वद्युप | वभ्युप |
| १५ | १६ | जनंन | जनने |
| १५ | २४ | विशेषण | विशेषेण |
| १५ | २५ | मतु | मनु |
| १५ | ३० | निर्वतंयति | निवर्तयति |
| १५ | ३४ | मनशब्देन | मनःशब्देन |
| १६ | ३० | सा नं | साधनं |
| १७ | १३ | वि यऽनु | विषयानु |
| १७ | १५ | ब लमुप | बहुलमुप |
| १८ | ५ | मित्यप | मित्युप |
| १९ | ६ | सामर्थ्या | सामर्थ्यं |
| १९ | ७ | क्लेश | क्लेशा |
| २० | २३ | द्धूवेन | द्धूवेन |
| २१ | २३ | वि द्धत्वात् | विरुद्धत्वात् |
| २१ | ३० | विकल्प्यो | विकल्पयो |
| २२ | ३ | योमवेक्ष्यत | योपवेक्ष्यत |
| २६ | १९ | त्वन्यववे | त्वन्या वेदे |
| २९ | ७ | इहत | इहैते |
| ३० | २८ | चानन्वय | च नानन्वय |
| ३१ | १९ | ज्ञानेन | ज्ञाने न |
| ३२ | २४ | नवरोधेन | नवबोधेन |
| ३५ | १२ | तेतरेत् | तेतरत् |
| ३५ | २३ | आत्मो | न्यान्यो |
| ३५ | ३० | आत्मेति | आन्येति |
| ३६ | १५ | व्यासिताभिन्न | व्यासिता भिन्न |
| ३६ | २३ | व्यासि | व्याप्ति |
| ३६ | ३२ | चेतनाधि | चेतनानधि |
| ३७ | ३ | धायपयेत | धापयेत |
| ३७ | १४ | केवक्त | केवल |
| ३७ | १७ | सन्दिग्ध- | सन्दिग्धा- |
| ३८ | १७ | उपेक्षेत | उत्प्रेक्षेत |
| ३९ | २० | अधाग्नि | अथाग्नि |
| ४० | १० | सत्ता स | सत्तास |
| ४२ | २९ | वैकल्यना | वैकल्येना |
| ४३ | ५ | न्यत्ववि | न्यत्वावि |
| ४३ | १८ | कारित्र | कारित्व |
| ४४ | १४ | सामग्री भावेतु | सामग्र्यभावे तु |
| ४४ | ३० | तादात्म्यतवु | तादात्म्यं तवु |
| ४५ | ४ | उक्तस्या | तत्कथमस्या |

| | | | |
|---|---|---|---|
| ४५ | ८ | बुद्धिमद्भाव | बुद्धिमदभाव |
| ४६ | २१ | धरादि | धरादा |
| ४७ | ६ | घटादिबुद्धि | घटादि बुद्धि |
| ४८ | ८ | कार्यवत्वात् | कार्यत्वात् |
| ४८ | २० | भावो | भावौ |
| ४८ | ३० | व्यतिरेकसिद्धे | व्यतिरेकासिद्धे |
| ५० | १७ | मृत | मृते |
| ५१ | १८ | सार्वज्ञ | सार्वज्ञ्य |
| ५१ | २४ | भावस्य सिद्धत्वात् | भावस्यासिद्ध-त्वात् |
| ५४ | १२ | प्रसह्य रूपा | प्रसह्यरूपा |
| ५६ | १६ | साधारणम् । | साधरण्यम्, |
| ५६ | २८ | सत्त्वाद्यशं | सत्त्वाद्यंश |
| ५९ | २६ | बाधासा | बाधा सा |
| ६० | १३ | कथयति | कथेति |
| ६० | १६ | विषयाप्र | विषया प्र |
| ६० | १७ | तय | तया |
| ६१ | १ | कपे | कूपे |
| ६२ | ४ | व्याप्तिन्वय | व्याप्तिरन्वय |
| ६३ | २० | अन्तकारण | अन्त्यकारण |
| ६४ | १० | चातिनागत | चातीतानागत |
| ६४ | १८ | कार्यव्याभि | कार्याव्यभि |
| ६४ | २१ | विशिष्टम | विशिष्टत्वम |
| ६५ | १ | यज्जन | यज्जनन |
| ६५ | ३ | भाविका | भावि |
| ६५ | १५ | प्रतीतिनि | प्रतीतिर्नि |
| ६५ | २३ | कान्तिकस्य | कान्तिकत्वस्य |
| ६६ | ५ | रर्थाक्रिया | रर्थक्रिया |
| ६६ | १७ | कार्यासिद्धिः | कार्यत्वासिद्धिः |
| ६८ | ३ | तद्रूवप | तद्रूप |
| ६८ | १७ | वक्षमाण | वक्ष्यमाण |
| ६९ | २ | प्रधेद | प्रभेद |
| ७० | ९ | योगव्याव | योगव्यव |
| ७१ | ५ | तदभावेन | तदभावे न |
| ७१ | १२ | तद्भावे | तदभावे |
| ७२ | १३ | गर्दभाद्विरुद्धानादिकं | गर्दभादिकं |
| ७२ | २२ | न्तरकारित्वेन | न्तराकारित्वेन |
| ७२ | २६ | पुनर्विरोधे | पुनरविरोधे |
| ७२ | २९ | स्फटिक | स्फटिकः |
| ७२ | ३२ | न्तराका T | न्तरका S |
| ७३ | ११ | शक्तये | शक्यते |
| ७३ | २० | व्यक्ति | व्यति |
| ७३ | २१ | नापेक्षत्वयो | नपेक्षत्वयो |
| ७३ | २१ | नेकात्वयो | नेकत्वयो |
| ७४ | १६ | न सिद्धः | नासिद्धः |
| ७४ | ३० | नासिद्धः T | न सिद्धः S |
| ७५ | १४ | भावसिद्धेः | भावासिद्धेः |
| ७५ | १६ | स्त्वोसौ | स्त्वसौ |
| ७५ | १९ | पेक्ष्यैव | पेक्षैव |
| ७५ | २९ | नुपवत्वात् | नुपादेयत्वात् |
| ७६ | ७ | ख्याततात् | ख्यातत्वात् |
| ७६ | १४ | क्षेपयोगात् | क्षेपायोगात् |
| ७८ | ३ | नापव | नापर |
| ७८ | २७,२८ | व्यासि | व्याप्ति |
| ८१ | १७ | प्रतीती | प्रतीति |
| ८१ | २७ | पक्ष | पक्षे |
| ८२ | ३ | परस्तु | परन्तु |
| ८२ | ९ | प्रमेयत्वा | प्रमेयत्व |
| ८२ | १३ | मकतैव | मूकतैव |
| ८२ | १३ | दायातति | दायातेति |
| ८३ | ४ | ववस्तुत्वे | ववस्तुत्व |
| ८४ | २१ | व्यापारभावा | व्यापाराभावा |
| ८४ | २६ | व्यच्छेव | व्यवच्छेद |
| ८६ | १८ | पक्षबोधः | पक्षे बोधः |
| ८६ | २० | त्वे ना | त्वेना |
| ८७ | १६ | नुभवावेव | नुभवा-[भावा]वेव |
| ८८ | १० | वा सत्ता | वाऽसत्ता |
| ८८ | १७ | कारित्वा | कारित्व |
| ८९ | १५ | माननिष्ठं | मानमिष्टं |
| ९० | ६ | तद्धेतुत्वं | तद्धेतुत्वे |
| ९० | ३१ | कृष्टत्वे | कृष्टेऽर्थं |
| ९३ | १० | अथ नित्य | अथानित्य |

# शुद्धिपत्रम्

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ९४ | २२ | भूभूतयो | भूतयो | ११५ | ९ | कवलं | केवलं |
| ९५ | १२ | सिद्धन | सिद्धेन | ११६ | २६ | विपक्षापेक्षो भेद | विवक्षापेक्षो भेद |
| ९६ | ५ | प्रथाभिन्नः | प्रथाभिन्नम् | ११७ | ११ | शङ्कानाशस्य | शङ्का नाशस्य |
| ९६ | १३ | भावार्थ | भावादर्थं | ११८ | ४ | व्यवहारो वि | व्यवहारोऽवि |
| ९७ | १२ | भावान्तरेणैव | भावान्तर- | ११८ | २६ | प्रतिबन्धातरि | प्रतिसन्धातरि |
| | | | [मन्त]रेणैव | ११९ | ३ | द्रष्टृवत्वं | द्रष्टृत्वं |
| १०१ | ३० | यनैक | येनैक | १२१ | ४ | क्रभित्व | क्रमिकत्व |
| १०१ | ३५ | हृयथ | ह्यर्थं | १२१ | ५ | प्रसत्यस्या | प्रसत्यप्या |
| १०२ | ३ | भदो | भेदो | १२४ | २९ | ममसन्निति | मसन्निति |
| १०२ | २४ | रस्य दर्शं | रस्यादर्शं | १२७ | १ | त्यव | त्येव |
| १०२ | ३१ | दभावसि | दभावासि | १२७ | ३ | त्वेन | त्वे न |
| १०२ | ३३ | कालन्तरे | कालान्तरे | १२८ | २५ | ग्रहेण | ग्रहेण [न] |
| १०६ | १४ | कार्यभेदो | कार्याभेदो | १३० | १९ | बाह्यावसानं | बाह्याध्यवसानं |
| १०६ | १९ | वस्तुनि | वस्त्वनि | १३० | २९ | पपत्तः | पपत्तेः |
| १०६ | २८ | विकलप | विकल्प | १३० | ३० | विशेषण | विशेषेण |
| १०८ | १४ | शङ्काविना | शङ्का विना | १३४ | २४ | तदसाधक | तत्साधक |
| १०९ | ३ | (र) | (र्) | १३५ | १ | ज्ञानानन्तरम् | ज्ञानान्तरम् |
| १०९ | २४ | सङ्गतना | सङ्गतेना | १३६ | १० | प्रसङ्गयो- | प्रसङ्ग- |
| १०९ | २९ | बाधितत्व | प्रबाधितत्व | | | विपर्ययो | विपर्ययोः |
| १०९ | ३२ | याऽव्यभि | या व्यभि | १३९ | ४ | चित्तं न वेद्यते | चित्तं वेद्यते |
| ११० | ९ | ताद्दगर्थं | तादृगर्थं | १४० | २६ | प्रपिभान | प्रतिभान |
| ११० | ११ | कीद्दशो | कीदृशो | १४१ | १३ | प्रमानेन | प्रमाणेन |
| ११० | २४ | क्रियाप्रति | क्रिया प्रति | १४१ | १४ | तस्यादृश्या | तस्य दृश्या |